














Heroes start early.

Ride, race, take a tumble or even take a fall.
Because it's never too early to be a hero.



# किशोरस्य कौशलम्





''अम्ब ! मम पितुः विषये महान्तम् आदरं प्रकटयन्ति ग्रामीणाः । ते परस्परं वदन्ति - 'द्वादश वर्षाणि यावत् गृहात् दूरे एव तिष्ठता तेन महान् त्यागः एव कृतः' इति । मम पिता कुत्र अस्ति अम्ब ? कदा प्रत्यागच्छेत् सः ?'' इति अपृच्छत् बालकः स्वमातरम् ।

''भवतः पिता शिल्पिनां महागणस्य नेतृत्वं वहति । अपूर्वस्य मन्दिरस्य निर्माणे उद्युक्तः अस्ति सः । तेन स्वीकृतं कार्यं कदा समाप्येत इति, कदा वा सः प्रत्यागच्छेत् इति वा अहं न जाने'' इति अवदत् माता ।

बालः मौनेन उपाविशत् । तस्य नेत्रे निमीलिते । पितुः नेतृत्वे महतः मन्दिरस्य निर्माणे उद्यतानां शताधिकानां शिल्पिनां गणस्य चित्रं तस्य नेत्रयोः पुरतः उपस्थितम् ।

''अम्ब, पितरं द्रष्टुमिच्छामि । कृपया अनुज्ञायताम्'' इति प्रार्थितवान् बालः ।

''वत्स ! राजाज्ञायाः अनुगुणं भवतः पितुः गृहत्यागस्य अनन्तरं भवतः जन्म जातम् । पित्रा भवान् न दृष्टः एव । सः भवन्तं कथं वा अभिजानीयात् ?'' इति अपृच्छत् माता ।

''अम्ब ! तद्विषये चिन्ता मास्तु । मां कथमपि अभिज्ञास्यति एव सः । मम दर्शनात् तस्य महान् सन्तोषः भवेत् । ममापि सन्तोषः स्यादेव'' इति उक्त्वा मातुः अनुज्ञां कथमपि प्राप्य सः बालः ततः निर्गतवान् । प्रस्थानसमये माता गृहाङ्गणस्थानि फलानि अवचित्य पुत्राय दत्तवती, यानि च तदीयः पिता विशेषतः इच्छति स्म।



बालः सुदीर्घप्रयाणं कृत्वा पितुः स्थानं प्राप्तवान् । पुत्रं दृष्ट्वा पिता नितरां सन्तुष्टः जातः ।

तत्र बालेन लक्षितं यत् मन्दिरस्य शिखरशिलायाः स्थापनविषये पिता, अन्ये शिल्पिप्रमुखाः च समस्याम् अनुभवन्तः सन्ति इति । सः आत्मना गृहे पठितं तं शिल्पशास्त्रग्रन्थं स्मृतवान्, यस्मिंश्च एतस्याः समस्यायाः परिहारः सूचितः आसीत् । तेन बालेन सूचितः परिहारमार्गः तत्रत्यैः अनुसृतः । तेन तैः सफलता प्राप्ता ।

---

## प्रश्नाः

१. तत् मन्दिरं किम् ? तस्य आराध्यदेवश्च कः ?

..................................................

२. तस्य बालस्य, तत्पितुः, तत्प्रदेशस्य राज्ञः च नाम किम् ?

..................................................

३. तस्य देवालयस्य निर्देशाय आंग्लेयैः उपयुक्तं नाम किम् ?

..................................................

ऊनचतुर्दशवर्षीयाः बालाः एव अत्र भागग्रहणाय अर्हाः । अत्र दर्शिते रिक्ते स्थले उत्तरं लेखनीयम् । नामधामादि-विवरणं प्रपूर्य अधोनिर्दिष्टसङ्केताय एतत् स्पर्धापत्रं प्रेषणीयम् -

Orissa Tourism Quiz Contest
Chandamama India Limited,
No.82, Defence Officers' Colony,
Ekkatuthangal, Chennai - 600 097.

नाम.................................................. वयः ....................

सङ्केतः .................................................. पिन् ....................



*One winner picked by Orissa Tourism in each contest will be eligible for 3 days, 2-night stay at any of the OTDC Panthanivas, upto a maximum of four members of a family. Only original forms will be entertained. The competition is not open to CIL and Orissa Tourism employees and their family members. Orissa Tourism, Paryatan Bhaven, Bhubaneswar-751 014. Ph:(0674)432177, Fax:(0674) 430887, e-mail:ortour@sancharnet.in. Website:Orissa-tourism.com*

## एतस्य अङ्कस्य विशेषाः सम्पुटः - १९ डिसेम्बर् - २००२ सञ्चिका - ०९




पुराणकथावली

२४



भानुमतः विवेकः
(वेतालकथा)

१९



मायासरोवरः - ९

११



विघ्नेश्वरः

४५

## अन्तरङ्गम्






SUBSCRIPTION

**For USA and Canada**
**Single copy $2**
**Annual subscription $20**
***Remittances in favour of***
***Chandamama India Ltd.***
**to**

**Subscription Division**
CHANDAMAMA INDIA LIMITED
No. 82, Defence Officers Colony,
Ekkatuthangal, Chennai - 600 097
E-mail : subscription@chandamama.org

**उपायनीक्रियताम्**
वायुयानेन भारतेतरदेशान् प्रति
**वार्षिकं (१२ सञ्चिकाः) - रू.९००/-**
**भारते रू. १२०/- (बुक्पोस्ट् द्वारा)**
भवदीयं धनं D.D.द्वारा धनादेश(M.O.)द्वारा वा
'Chandamama India Limited'
नाम्ना प्रेषणीयम् ।

विज्ञापिकादानार्थं सम्पर्क्यताम् -
**चेन्नै -**
Ph - 044-2347384,
2347399
e-mail : advertisements@
chandamama.org
**देहली -**
मोना भाटिया
Ph - 011-6515111/
6565513/6565516
**मुम्बयी -**
शकीलमुल्ला
Ph - 022-2661599/
2661946/2653057

भारतनायकस्पर्धायां भागम् ऊढ्वा प्राप्नुवन्तु अपूर्वाणि पारितोषिकाणि

# भारतीयाः नायकाः-१५

अत्र सन्ति केचन प्रसिद्धाः साहित्यकाराः ।
तान् अभिजानन्तु भवन्तः ।

१ अहम् आनन्दमठनामकस्य ग्रन्थस्य रचयिता अस्मि, यस्मिंश्च 'वन्दे मातरम्' इत्येतत् गीतम् अस्ति । मम नाम किम् ?

............................................................

२ अहं प्रथमः हिन्दीलेखकः, यश्च जीवनस्य यथावत्तां स्वकृतिषु दर्शितवान् । मया समाजनिमित्तं सङ्ग्रामः कृतः । 'सेवासदनम्' 'गोदानम्' इत्येतौ मया रचितौ प्रसिद्धौ कथाग्रन्थौ । मम नाम किम् ? ............................................

३ अहं कश्चन प्रसिद्धः तमिळुकृतिकारः । मया 'चित्तिरापवै' इत्येतस्याः कृतेः निमित्तं १९७५ तमे वर्षे ज्ञानपीठप्रशस्तिः लब्धा । एषोऽहं कः ?

............................................

४ अहं 'मालगुडि'नामिकायाः काल्पनिककृतेः रचयिता । 'स्वामी मित्राणि च' 'मार्गदर्शकः अन्धकारप्रकोष्ठश्च' इत्यादयः कृतयः अपि मया रचिताः । मम नाम किम् ?

............................................

५ मया ऋग्वेदः मलयाळभाषया अनूदितः । मम नाम किम् ?

............................................

समुचितोत्तरदातारः त्रयः पुरस्क्रियन्ते द्विचक्रिकादानेन



प्रतिप्रश्नम् उत्तरं लिखन्तु । एतेषु पञ्चसु नायकेषु प्रियतमः कः किमर्थं च इति दशभिः शब्दैः लिखन्तु । मम प्रियतमः नायकः ............................................
............................................
............................................
............................................

भागग्रहीतुः नाम ............................................
वयः .................... कक्ष्या ....................
सङ्केतः ............................................
............................................
............................................

पिन् .................... दूरवाणी ....................

एतं पुटं पृथक्कृत्य प्रेषयन्तु अधोनिर्दिष्टसङ्केताय

**भारतनायकस्पर्धा-१५**
**चन्दमामा इण्डिया लिमिटेड्,**
८२, डिफेन्स् आफीसर्स् कालोनी
एक्काट्टुतङ्गल्, चेन्नै - ६०० ०९७
उत्तरप्रेषणाय अन्तिमदिनाङ्कः - ५, जनवरी, २००३

*नियमाः -*

१. अधिकाष्ट-ऊनचतुर्दशवर्षीयाः एतस्यां स्पर्धायां भागं ग्रहीतुम् अर्हन्ति ।
२. विविधभाषाभिः प्रेषितानि उत्तराणि परिशील्य त्रयः श्रेष्ठाः चीयन्ते । यदि योग्योत्तरदातारः बहवः तर्हि प्रियतमनायकविषये लिखितं वाक्यम् अवलम्ब्य चयनं क्रियते ।
३. निर्णायकानां निर्णयः एव अन्तिमः ।
४. एतं विषयम् अधिकृत्य पत्रव्यवहारः कोऽपि न करणीयः ।
५. विजेतारः पत्रद्वारा सूच्यन्ते ।



संस्थापकौ –
चक्रपाणिः नागिरेड्डी च

# अवगम्यतां स्वदेशः

आदिशङ्करः, स्वामी विवेकानन्दः, महात्मा गान्धिः इत्यादयः भारतस्य प्रदक्षिणं कृत्वा अवगतवन्तः यत् अत्रत्या एकैका शिला, एकैकः वृक्षः, एकैकं भवनं चापि अत्रत्यायाः श्रेष्ठपरम्परायाः सन्देशं सन्दिशति इति ।

वयं श्रुतवन्तः यत् केभ्यश्चित् शतकेभ्यः पूर्वं श्रीशङ्कराचार्यः आभारतं प्रवासं कृतवान् इति । गते शतके विवेकानन्दः भारतस्य प्रतिकोणं गतवान् आसीत् इति तु वयं प्रत्यक्षं जानीमः एव । स्वामी विवेकानन्दः कन्याकुमार्यां समुद्रमध्ये महाशिलातले उपविश्य उत्तरदिशि दृष्टिं निक्षिप्य एकाग्रचित्ततया वीक्षितवान् न केवलं भारतस्य विस्तारम्, अपि तु श्रेष्ठतत्त्वसम्पदम् अपि ।

गान्धिवर्यः राष्ट्रियतायाः अहिंसातत्त्वस्य च प्रसाराय भारतस्य प्रतिग्रामं गतवान् प्रायः । सः वदति स्म – ''अहं भारतं वृतवान् अस्मि । यतः मम सर्वं स्वं तस्यै समर्पितम् अस्ति मया'' इति ।

शालाबालाः प्रवासार्थं नीयन्ते तदा तदा । किन्तु तेषां प्रवासानां परिमितिः भवति । बालाः स्वस्य देशं प्रत्यक्षदर्शनेन जानीयुः, न तु पुस्तकेभ्यः दूरदर्शनात् वा । वस्तुतः प्रवासः एव तेषां दृष्टिं विस्तारयितुम् अर्हति ।

भारतस्य प्रथमव्योमयात्रिणा राकेशशर्मणा सुदूरे आकाशे स्थित्वा यत् उक्तं तत् स्मरन्ति खलु भवन्तः – *'सारे जहाँ से अच्छा, हिन्दुस्तान हमारा'* इति ।

सत्यम्, अस्माकं भारतम् अस्ति सर्वोत्तमः देशः ।

---

सम्पादकः – **विश्वम्**

**Visit us at : http://www.chandamama.org**





# नागार्जुनकोण्डः



इतिहासः वर्तमानं च यत्र सम्मिलिते स्तः तत्र भ्रमणं कर्तुम् इष्यते किं भवद्भिः ? तर्हि आन्ध्रप्रदेशीयं नागार्जुनकोण्डं प्रति नागार्जुनपर्वतं प्रति वा गच्छन्तु । अत्र बौद्धमठस्य, प्राचीनविश्वविद्यालयस्य च अवशेषाः प्राप्यन्ते । विशालः प्राचीनः जलबन्धः अपि चित्तम् आकर्षति ।

नागार्जुनकोण्डः इक्ष्वाकुवंशीयानां काले विजयपुरीनाम्ना ख्यातः आसीत् । तृतीयशतकीयायाः बौद्ध-संस्कृतेः अवशेषाः अत्र प्राप्ताः सन्ति उत्खननतः । प्रायः इक्ष्वाकुवंशस्य पतनस्य अनन्तरं, तन्नाम चतुर्थे शतके, एतस्य प्रदेशस्य वैभवं समाप्तम् अभवत् ।

इक्ष्वाकुवंशस्य स्वर्णकाले निर्मितः कीर्तिस्तम्भः १९२६ तमे वर्षे उत्खननावसरे प्राप्तः अस्ति ।

वयं शङ्खकारकं बौद्धमठावशेषं द्रष्टुं शक्नुमः अत्र । पञ्चाङ्गात्मके एतस्मिन् मठे १५०० प्रकोष्ठाः आसन् । एतस्मिन् भवने उत्तमजलवायुव्यवस्था आसीत् । अत्र एकः विख्यातः बौद्धविश्वविद्यालयः आसीत् इति तर्क्यते ।

कृष्णानदीप्रवाहम् अवरुध्य निर्मितः नागार्जुनसागरबन्धः अत्र अस्ति । जलबन्ध-योजना भारते यदा आरब्धा तदा एव निर्मितः एषः । १२५ मीटरोन्नतः एषः जलबन्धः जगति अत्युन्नतेषु अन्यतमः ।

## प्राप्तिमार्गः

नागार्जुनकोण्डः हैदराबादतः १५० कि.मी.दूरे अस्ति । हैदराबाद्, विजयवाडा, गुण्टूरु इत्येतेभ्यः नगरेभ्यः एतत् स्थानं प्रति गमनाय उत्तमा लोकयानव्यवस्था अपि अस्ति ।



# मायासरोवरः

## ९

*[जयशीलेन प्रयुक्तः बाणः यदा नरवानरे लग्नः तदा कृपाणजित् पर्वतस्य अधोभागे दृष्टिं प्रसारितवान् । तदा सः स्वशत्रुं जयशीलम् अभिज्ञातवान् । ततः सः गडेकोण्डस्य अनुचरैः सह वसतिं प्रति निर्गतवान् । गडेकोण्डः यदा तस्य उपहासं कृतवान् तदा कृपाणजित् नितरां कुपितः । सः नरवानरं किमपि सूचितवान् । नरवानरः गडेकोण्डम् उन्नीतवान् । तदनन्तरम् ....]*

कृपाणजित् गडेकोण्डस्य संहाराय नरवानरं प्रेरयन् अस्ति इति यदा ज्ञातं तदा गडेकोण्डानुचराः क्रोधेन शूलादीनि उन्नीय कृपाणजितम् अभिलक्ष्य आगताः । एतत् दृष्टवतः कृपाणजितः हृदये महती भीतिः उत्पन्ना । 'एते वन्याः स्युः चेदपि एतेषां शक्तिः न न्यूना, अहं तु एकाकी अस्मि'' इति सः स्मृतवान् ।

अतः सः एकम् उपायं कृतवान् । गडेकोण्डानुचरान् सः हसन् उक्तवान् - ''अलं त्वरया । अहं भवतां सुहृत् एव अस्मि, न कदापि शत्रुः । नरवानरः कथं मदधीनः अस्ति इति दर्शयितुम् अहम् इष्टवान्'' इति । तदनन्तरं गडेकोण्डं नरवानरस्य हस्तात् मोचितवान् सः ।

गडेकोण्डः भयेन कम्पते स्म । सः श्रान्तः सन् वसतेः पुरतः कस्याश्चित् शिलायाः उपरि उपविष्टवान् । तदनुचराः तं परितः स्थित्वा पृष्टवन्तः - 'अग्रे किं करणीयम् ?' इति । एतावता गडेकोण्डः अवगतवान् आसीत् यत् कृपाणजितः साहाय्यं स्वीकुर्वता मया अपराधः कृतः इति ।



सः मन्दस्वरेण अनुचरान् उक्तवान् - ''मम वचनानि सश्रद्धं शृण्वन्तु । सः कृपाणजित् नरवानरस्य पार्श्वे एव स्थित्वा अस्मान् तीक्ष्ण-दृष्ट्या पश्यन् अस्ति । प्रत्यक्षं सम्मुखीकरणेन वयं तं जेतुं न शक्नुयाम एव कदापि । तदीयः नरवानरः खड्गः च आदौ अस्माभिः स्वायत्ती-करणीयः । तदनन्तरम् एव तस्य जयं संहारं दूरीकरणं वा वयं चिन्तयितुं शक्नुयाम कदाचित्'' इति ।

''भवता युक्तम् उक्तम् । किन्तु तदर्थं मार्गः कः ? किं करणीयम् अस्माभिः ?'' इति अपृच्छत् कश्चन वनवासी ।

''यदि एषः निवार्येत तर्हि वामनराज्ञी अस्मान् लीलया पराजयेत । तया सह महाशक्तिमन्तौ उभौ पुरुषौ अपि स्तः खलु ?'' इति अवदत् अपरः ।

तदा गडेकोण्डः कटुस्वरेण अवदत् - ''यदि मरणम् एव निश्चितं तर्हि परकीयस्य हस्तात् किमर्थं मरणं प्राप्तव्यम् ? स्वजातिजनैः सह युद्धं कृत्वा एव मरणं प्राप्नुयाम । अन्यच्च, युद्धम् अङ्गीकृतं चेत् मरणम् एव निश्चितम् इति नास्ति । जयस्यापि सम्भावना अस्ति एव तत्र । अथवा किं प्राणहानिचिन्तनेन ? सन्धेः अङ्गीकरणम् अपि वरम् एव स्यात् । सन्धि-प्रस्तावं सा राज्ञी अङ्गीकुर्यात् अपि । अतः प्रकृतं तु सन्धिप्रस्तावः एव वरम् इति भाति मम'' इति ।

दूरे स्थितः कृपाणजित् तेषां चलन-वलनादिकं परिशीलयन् आसीत् । सः नरवानरेण सह गडेकोण्डस्य समीपम् आगत्य गर्जनस्वरेण अवदत् - ''किं प्रवर्तते अत्र ? मम नाशनाय उपायः किं चिन्त्यते ? अहं सर्वम् अवगन्तुं शक्नोमि । हुं, सत्यं वदन्तु'' इति ।

तदा गडेकोण्डः शिलातः उत्थाय अवदत् - ''महोदय ! वयं तादृशं किमपि चिन्तयन्तः न स्मः । अस्माकं स्थितिः शोचनीया अस्ति । वयं कष्टस्थितौ स्मः । अतः सूर्यास्ततः पूर्वम् अरण्ये कुत्रापि गच्छाम इति चिन्तयन्तः स्मः'' इति ।

गडेकोण्डस्य एतत् वचनं श्रुत्वा कृपाणजित् भीतः । अरण्यवासतः तेन यद्यत् कष्टम् अनुभूतं तत्सर्वं स्मृतं तेन ।

अतः सः विनम्रस्वरेण गडेकोण्डम् अवदत् - ''गडेकोण्ड ! भवतः भीतिः मास्तु । भवतां साहाय्यं स्वीकृत्य अद्य मध्यरात्रे अहं तान् समूलं नाशयिष्यामि । मम, नरवानरस्य च

शक्तिः कियती इति प्रदर्शयिष्यामि । यदि शत्रवः विनष्टाः स्युः तर्हि भवान् एव एतस्य प्रदेशस्य राजा भविष्यति । गडेकोण्डमहाराजः जयतु'' इति ।

एतत् श्रुतवतः गडेकोण्डस्य मुखे आनन्द-रेखा उत्पन्ना । कृपाणजित् नरवानरस्य शृङ्खलां गृहीत्वा आकर्षन् - ''आवां नितरां बुभुक्षितौ स्वः इदानीम् । आवयोः आहारस्य व्यवस्थां कारयतु'' इति उक्त्वा स्वस्य कुटीरं प्रति गतवान् ।

''भवतोः निमित्तम् आहारः सिद्धः अस्ति'' इति उक्त्वा गडेकोण्डः मनसि एव हसितवान् ।

कृपाणजितः कुटीरम् अन्यकुटीरेभ्यः दूरे आसीत् । तत् प्रविशन् सः गडेकोण्डम् उद्दिश्य उच्चस्वरेण अवदत् - ''अर्धरात्रपर्यन्तम् अहं सम्यक् निद्रां करिष्यामि । केनापि मम निद्रायाः भङ्गः न करणीयः । मध्यरात्रे शत्रुसंहारः भविष्यति'' इति ।

गडेकोण्डः आनन्देन शिरः चालितवान् । सः विश्वासार्हैः कैश्चित् साहसिभिः युवकैः अनुयायिभिः सह स्वकुटीरं प्रविष्टवान् । ततः घण्टाचतुष्टयस्य अनन्तरं काचित् विशिष्टा घटना घटिता ।

शयानः कृपाणजित् अकस्मात् उत्थाय - ''अहो, तैलबिन्दवः !'' इति उक्त्वा इतस्ततः पश्यन् उच्चस्वरेण अवदत् - ''भोः, कः तत्र बहिः ? अत्र कथम् एरण्डतैलस्य सद्भावः ?'' इति ।

तदा बहिर्भागतः कश्चन ध्वनिः श्रुतः - ''महाशय ! न एतत् एरण्डतैलम्, अपि तु



तिलतैलम् । मशककीटादयः भवतः निद्राभङ्गं न कुर्युः इत्यतः एतस्य उपयोगः कृतः अस्ति अद्य । भवता सुखेन निद्रा करणीया खलु ? मध्यरात्रे भवता शत्रुसंहारार्थं गन्तव्यम् अस्ति'' इति ।

''एवम् ! भवतु तावत्'' इति उक्त्वा कृपाणजित् सकृत् जृम्भणं कृत्वा नेत्रे निमीलितवान् ।

तस्मिन् समये गडेकोण्डः कैश्चित् अनुचरैः सह तत्र आगतवान् । तेन नेत्रसङ्केतः यदा कृतः तदा कश्चन अनुचरः कृपाणजितः कुटीरस्य अन्तः गत्वा खड्गं स्वीकृत्य आगत-वान् विना शब्दम् । ततः तस्मिन् कुटीरे अग्निः योजितः ।

द्वित्रनिमेषाभ्यन्तरे एव कुटीरस्य अन्तः शयानः कृपाणजित् अग्नितापम् अनुभूतवान् ।



जाता ।

गडेकोण्डः एतत् दृश्यं दृष्ट्वा उच्चस्वरेण अनुचरान् उक्तवान् - ''सः नरवानरः गच्छतु नाम, कृपाणजितं तु शूलैः विच्छिद्य मारयन्तु'' इति ।

एतत् कृपाणजिता अपि श्रुतम् । एतस्मात् नितरां भीतः सः समीपे स्थितम् एकं काष्ठखण्डम् उन्नीय हूङ्कुर्वन् उन्मत्तः इव व्यवहरन् गडेकोण्डस्य अनुचराणां मारणे उद्युक्तः जातः ।

कुटीरस्य अग्निः सर्वत्र प्रसरन् आसीत् । गडेकोण्डस्य अनुयायिनां ध्वनिः चीत्कारः च दूरपर्यन्तं श्रूयते स्म ।

तस्मिन् समये वृक्षाणां मध्ये उभौ अश्वारोहिणौ दृष्टिगोचरौ जातौ । तयोः शरीरं मत्स्यचर्मणा आवृतम् आसीत् । अश्वयोः शरीरम् अपि तथैव । मकरकेतोः गजस्य शरीरं यादृशेन चर्मणा आवृतम् आसीत्, तादृशेन एव चर्मणा आवृतम् आसीत् अश्वयोः शरीरम् अपि । अश्वारोहिणोः शरीरे दीर्घः खड्गः लम्बते स्म ।

ज्वलन्तं कुटीरं दृष्ट्वा तयोः अन्यतरः कोषात् खड्गम् आकृष्य अवदत् - ''अग्रज ! सर्पणख ! तत्र कुटीरं ज्वलत् दृश्यते । तत्र वसन्तः शत्रवः एतत् कृतवन्तः स्युः इति भाति । कुटीरवासिनः संहारे ते उद्युक्ताः सन्ति इव'' इति ।

तदा अपरः, तन्नाम सर्पणखः, अवदत् - ''सर्वनाशः भवतु नाम । वयम् अन्य-लोकीयाः, एते अन्यलोकीयाः । एतेषां मरणतः अस्माकं न हानिः, न वा लाभः । आवाभ्यां

सः उच्चस्वरेण आक्रोशनं कृतवान् - ''अहो, वञ्चना ! महती वञ्चना एषा !! अहम् एतस्य प्रतीकारं साधयिष्यामि एव'' इति ।

ततः उत्थाय सः खड्गं स्वीकर्तुं द्वारस्य दिशि अधावत् । किन्तु तत्र तदीयः खड्गः न आसीत् ।

एतदवसरे एव नरवानरः अपि आक्रोशनम् अकरोत् । सः शृङ्खलायाः खण्डनाय प्रयासम् अकरोत् । तेन सा खण्डिता जाता । चतसृषु दिक्षु प्रसरन्तम् अग्निं दृष्ट्वा सः द्वारस्य दिशि अधावत् ।

कृपाणजित् स्वस्य प्राणानां रक्षणाय मार्गं कमपि अपश्यन् धावतः नरवानरस्य कटौ लम्बमानां शृङ्खलाम् अगृह्णात् । नरवानरः बलेन द्वारं नुत्वा भञ्जयित्वा बहिः अगच्छत् । तेनैव सह कृपाणजित् अपि बहिः आगत्य अपतत् । बन्धशृङ्खला तस्य हस्तात् च्युता-

यदर्थम् आगतं तत् स्मर्तव्यम् । आवाभ्याम् अरण्ये यत् अट्यते तस्य उद्देशः किं भवता विस्मृतः ?'' इति ।

''न किमपि विस्मृतम् । सर्वं स्मरामि अहम्'' इति अवदत् सर्पसखः ।

ततः सः कुटीरस्य दिशि पश्यन् आश्चर्यमिश्रितस्वरेण अवदत् - ''विचित्रं दृश्यम् एतत् ! कश्चन नरवानरः आत्मरक्षणाय धावितुम् उद्युक्तः दृश्यते । तस्य पृष्ठतः दृश्यते कश्चन पुरुषः । तम् एते वन्यजातीयाः निर्दयं बहुधा पीडयन्तः सन्ति । एतत् सर्वं दृष्ट्वा अपि किम् अस्माभिः तूष्णीं स्थातुं शक्येत ?'' इति ।

''आम् । मया अपि एते अंशाः लक्षिताः । सः नरवानरः अपरः मनुष्यः च सजीवं ग्रहीतव्यौ आवाभ्याम् । तस्य मानवस्य द्वारा विनष्टस्य सहोदरस्य वार्ता कापि ज्ञायेत अपि'' इति वदन् सर्पणखः स्वस्य अश्वस्य खलीनम् आकृष्टवान् । सर्पसखः तम् विना वचनम् अनुसृतवान् ।

उभौ अपि गडेकोण्डवसतेः समीपं गतवन्तौ । नरवानरः क्रुद्धः सन् कुटीराणां नाशने मग्नः आसीत् । कृपाणजित् च उन्मत्तः इव व्यवहरन् गडेकोण्डानुचरान् काष्ठखण्डेन प्रहरन् आसीत् ।

''अग्रज ! अहं नरवानरस्य ग्रहणं चिन्तयामि । भवान् तस्य मानवस्य विषये अवधानं ददातु'' इति त्वरया उक्त्वा सर्पसखः नरवानरस्य दिशि स्वकीयम् अश्वं वेगेन नीतवान् ।

सर्पणखः कमलनालैः निर्मितां रज्जुम् उन्नीय भ्रामयन् तां कृपाणजितः कण्ठं लक्ष्यीकृत्य क्षिप्त्वा उच्चस्वरेण अवदत् - ''मायासरोवरः जयतात्'' इति ।

तेन क्षिप्ता रज्जुः कृपाणजितः कण्ठे सम्यक् लग्ना । सर्पणखः रज्जुम् आकृष्टवान् । तेन पीडाम् अनुभवन् कृपाणजित् सर्पणखम् उद्दिश्य अवदत् - ''महोदय ! मां मा मारयतु





''अस्तु, शिथिलीकरिष्यामि । किन्तु तदा भवता धावनाय प्रयासः न करणीयः । यदि क्रियेत तर्हि एषा रज्जुः भवतः विषये यमपाशायेत'' इति गम्भीरस्वरेण अवदत् सर्पणखः ।

यदा रज्जुबन्धः किञ्चित् शिथिलः जातः तदा कृपाणजित् अवदत् – ''महोदय ! मकरकेतुः इदानीं कुत्र अस्ति इति अहं न जानामि । केभ्यश्चित् दिनेभ्यः पूर्वम् अमरावतीनगरीयः जयशीलनामकः कश्चन, तस्य सुहृत् कापालिकः कश्चन च मकरकेतुं बहुधा पीडितवन्तौ । अरण्यवासिनां मुखात् एषा वार्ता ज्ञाता मया'' इति ।

अत्रान्तरे गडेकोण्डः सर्पणखस्य समीपम् आगत्य विनयेन नमस्कृत्य अवदत् – ''जलाश्वशूर ! एतेन दुष्टेन सह वार्तालापं कुर्वन् भवान् स्वस्य सहचारिणः का गतिः जाता इति न लक्षितवान् एव'' इति ।

तदा सर्पणखः सर्वत्र दृष्टिं प्रसार्य गडेकोण्डम् अपृच्छत् – ''मम सहोदरस्य किं जातम् ?'' इति ।

''भवतः सहोदरस्य नरवानरस्य च युद्धं जातम् । उभौ अपि युद्धं कुर्वन्तौ वृक्षसमूहं प्रविष्टवन्तौ । जलाश्वः ततः अधावत् । सः नरवानरः भवतः सहोदरस्य कण्ठं गृहीत्वा तम् उन्नीय स्कन्धे आरोप्य ततः निर्गतवान् । सः घोरः नरवानरः एतेन दुष्टेन पोषितः जन्तुः । भवत्सहोदरः मारणीयः इति एषः एव नरवानरम् आज्ञापितवान् स्यात् अपि'' इति उक्तवान् गडेकोण्डः ।

''अये मूर्ख ! विस्तरेण कथयता भवता

कृपया । भवतः साहाय्यं करिष्यामि अहं, भवादृशस्य साहाय्यं पूर्वं यथा कृतं तथा । भवादृशः सः अपूर्वस्य गजस्य उपरि उपविष्टः आसीत्'' इति ।

तस्य वचनं श्रुत्वा सर्पणखः आश्चर्येण – ''एतस्य तात्पर्यं यत् भवान् मकरकेतुं जानाति इति । सः महापराक्रमी योद्धा । तादृशः सः भवतः साहाय्यं यत् प्रार्थितवान् तस्मात् सिद्धं यत् सः महति अपायगर्ते पतितः इति । इदानीं सः कुत्र अस्ति ? वदतु शीघ्रम्'' इति आज्ञास्वरेण अवदत् ।

कृपाणजित् हस्तद्वयम् अपि प्रसार्य दैन्यं प्रदर्शयन् – ''भवता क्षिप्ता एषा रज्जुः मम कण्ठम् आवृत्य श्वासोच्छ्वासं निरुन्धती अस्ति । अतः अहं वक्तुं कष्टम् अनुभवामि । कृपया एतस्याः बन्धं शिथिलीकरोतु'' इति प्रार्थितवान् ।

महान् विलम्बः कृतः । एतां रज्जुं गृह्णातु । एतं भवान् एव निगृह्णातु'' इति वदन् रज्जुं गडेकोण्डाय दत्त्वा अश्वं चोदयन् - ''एषः दुष्टः पलायनं यथा न कुर्यात् तथा करणं भवतः दायित्वम्'' इति उक्त्वा वेगेन अश्वं चालयन् वृक्षाणां मध्ये कुत्रापि अदृश्यतां गतः ।

कृपाणजित्-नरवानरयोः कुटीरस्य दाहात् तदनन्तरं च यः कोलाहलः उत्पन्नः सः श्रुतः पर्वतस्य अपरपार्श्वे विद्यमानाभ्यां जयशील-सिद्धसाधकाभ्याम् । अतः 'तत्र किं प्रवर्तते इति ज्ञात्वा आगच्छतु' इति आदिश्य तौ वामनसेनाधिपतिं प्रेषितवन्तौ ।

सः सेनापतिः उभाभ्याम् अनुयायिभ्यां सह पर्वतम् आरुह्य सर्वम् अपश्यत् । तत्र प्रवर्तमानं दृष्टवतः तस्य महान् सन्तोषः जातः । तेन सर्पणखसर्पसखौ अपि दृष्टौ ।

धावन् प्रत्यागत्य आत्मना यद्यत् दृष्टं तत्सर्वं जयशीलसिद्धसाधकौ निवेदितवान् सः सेनापतिः ।

सर्वं श्रुत्वा सिद्धसाधकः शूलम् उन्नीय - 'जय महाकालि !' इति सकृत् उद्घोष्य जयशीलम् अवदत् - ''जयशील ! आवाभ्यां यस्य कार्यस्य निमित्तं प्रस्थितं तत् कार्यम् अवश्यं सफलं भविष्यति । जलाश्वम् आरुह्य यौ आगतौ तौ मकरकेतोः एव जनौ इत्यत्र नास्ति सन्देहः । तौ गृहीत्वा सामोपायः दण्डोपायः वा आश्रितः चेत् तयोः मुखात् मायासरोवरस्य विषये अधिकं विवरणं ज्ञायेत । मायासरोवरस्य रहस्यं ज्ञातं चेत् कनकाक्ष-



महाराजस्य अपत्ययोः काञ्चनवर्मकाञ्चन-मालयोः विमोचनं सुलभसाध्यं भवेत् कदाचित्'' इति ।

तदा जयशीलः मन्दहासं प्रकटयन् उक्तवान् - ''सिद्धसाधक ! किं जलाश्वारोहिणोः आगमनमात्रेण अस्माकं समस्या परिहृता भवेत् ? किं कनकाक्षमहाराजस्य अपत्यद्वयं प्राप्तं भवेत् ? न खलु ? भवतः उत्साहः श्लाघ्यः एव । किन्तु तावता किमपि न सिध्यति । तौ जलाश्वारोहिणौ किमर्थम् एतं प्रदेशम् आगतौ, तयोः सजीवग्रहणं च कथम् इत्यादिकम् आदौ अस्माभिः चिन्तनीयम्'' इति ।

जयशीलस्य कथनं श्रुत्वा हतोत्साहः सिद्धसाधकः शूलं भूमौ स्थापयन् अवदत् - ''कथं तौ सजीवं ग्रहीतव्यौ इति नु भवता एव चिन्तनीयम्'' इति ।

तदा जयशीलः पृष्टवान् - "तदस्तु नाम । भवता शूलं किमर्थं भूमौ स्थापितम् ? किं मन्त्रशक्तिः एव सर्वसाधिका इति भवान् चिन्तयति ?" इति ।

सिद्धसाधकः - 'जय महाकालि !' इति उक्त्वा पुनरपि शूलम् उन्नीय - "जयशील ! मम मन्त्रशक्तिः अद्यावधि परिपूर्णतां न गता । पूर्वं कदाचित् महाकाल्याः सेवकः कालकालः मम प्राणान् एव अपहर्तुं प्रयासं कृतवान् आसीत् इत्यादिकं सर्वं भवान् जानाति एव" इति ।

"आं, जानामि तत् सर्वम्" इति सिद्धसाधकम् उक्त्वा सेनाध्यक्षं पश्यन् - "भवान् चितैः समर्थैः कैश्चित् सैनिकैः सह माम् अनुसरतु" इति आज्ञापितवान् ।

"महोदय ! भवतः आज्ञां यथावत् पालयिष्यामः" इति विनयेन उक्तवान् सेनाध्यक्षः ।

जयशीलः सिद्धसाधकः च तैः सैनिकैः सह किञ्चिद्दूरं गतवन्तौ । वामभागे वृक्षाणां मध्ये तैः नरवानरस्य हर्षोद्गारः श्रुतः । सर्वे आश्चर्येण तस्यां दिशि दृष्टिं प्रसारितवन्तः ।

नरवानरः वृक्षाणां मध्ये महता वेगेन गच्छन् आसीत् । तस्य स्कन्धे विवक्षणवेषधारी पुरुषः दृश्यते स्म । तस्मिन् चलनवलनादिकं न दृश्यते स्म ।

"जयशील ! यौ सजीवं ग्रहीतव्यौ इति आवाभ्यां चिन्तितं तयोः अन्यतरः एव अयम् इति भाति । प्रायः एषः नरवानरेण मारितः अस्ति । सः अपरः कुत्र इति न ज्ञायते" इति उक्तवान् सिद्धसाधकः ।

तावता जलाश्वम् आरूढवान् सर्पणखः वृक्षाणां मध्यतः वेगेन आगच्छन् - "सर्पसख ! सर्पसख !! क्वास्ति भवान् सर्पसख !" इति उच्चैः अवदत् ।

जयशीलः झटिति हस्तौ उन्नीय - "भो भोः, भवन्तः सर्वे वृक्षाणां मध्ये निलीय तिष्ठन्तु । केनापि कोऽपि शब्दः न करणीयः सर्वथा । सः जलाश्वारोही कथमपि अस्मान् न पश्येत् । अस्माकम् उपस्थितिम् अपि न जानीयात् । कथमपि सः अस्माभिः सजीवं ग्रहीतव्यः" इति आदेशस्वरेण अनुयायिनः सूचितवान् ।

- *(अनुवर्तते)*



# वेताल-कथा

## भानुमतः विवेकः

दृढव्रती त्रिविक्रमः पुनरपि वृक्षस्य समीपं गतवान् । वृक्षम् आरुह्य शाखायां लम्बमानं शवं स्कन्धे आरोप्य अधः आगतवान् । ततः यथापूर्वं मौनेन श्मशानाभिमुखं प्रस्थितवान् च । तदा शवान्तर्गतः वेतालः अवदत् - "अये राजन् ! स्वस्य विजयः भविष्यति एव इति भवान् निश्चितवान् अस्ति इति भाति । अतः एव भवान् एतादृशानि कष्टानि मौनेन सहते । क्रूरजन्तुभ्यः, भूतप्रेतादिभ्यः, श्मशानपरिसरतः वा नास्ति भीतिः भवतः । किन्तु सर्वदा एतादृशः विश्वासः फलदायी एव भवेत् इति न । पूर्वं वनवासी कश्चन तरुणः भवान् इव एव अति-विश्वासी आसीत् । अतः महाराजेन सहैव स्पर्धा कृता तेन । विजयः अपि



अवगतानि । काले काले मन्त्रिणां मार्गदर्शनं प्राप्नुवन् सः योग्येन क्रमेण राज्यपरिपालनम् अकरोत् ।

कदाचित् कश्चन राजोद्योगी तम् अवदत् - ''प्रभो, अस्माकं राज्यस्य उत्तरक्षेत्रं पूर्वक्षेत्रं च विन्ध्यारण्यमयम् इति भवान् जानाति एव । मम जन्मभूमिः अपि सा एव । भवतः पितुः अनुग्रहस्य कारणतः मया अत्र उद्योगः प्राप्तः । मम जन्मभूमिपरिसरः अति-रमणीयः । तत्रत्यं प्राकृतिकसौन्दर्यं तावत् वर्णनातीतम् । तत्र अनन्यलभ्याः सस्यवर्गाः प्राणिनः च सन्ति । यदि तेषु प्रदेशेषु भवान् मृगयां कुर्यात् तर्हि अपूर्वप्राणिनः प्राप्येरन् प्रकृतिसौन्दर्यस्य आस्वादनम् अपि भवेत्'' इति ।

भानुमान् मृगयाप्रियः आसीत् एव । उत्तरारण्यस्य वर्णनस्य श्रवणात् तस्य मनसि तीव्रा मृगयेच्छा उद्बुद्धा । अतः कदाचित् सः राज्यस्य शासनभारं मन्त्रिषु निक्षिप्य मृगया-वीरैः कैश्चित् सैनिकैः सह उत्तरारण्यं प्रति प्रस्थितवान् ।

तत्र सः विरलदृश्यान् प्राणिनः दृष्टवान् । तथैव विशिष्टान् वन्यजातीयान् जनान् अपि दृष्टवान् । तेषां विषये कथयन् तदीयसहचारी कश्चित् अवदत् - ''अत्रत्याः लक्ष्मणजातीयाः इति उच्यन्ते । पूर्वं श्रीरामः वनवाससमये अत्र सञ्चारं कृतवान् इति श्रूयते । तदवसरे एते श्रद्धया भक्त्या च तस्य सेवां कृतवन्तः । तस्मात् प्रसन्नः श्रीरामः अवदत् - 'भवन्तः लक्ष्मणः इव वीराः, धीराः कर्तव्यपारायणाः च सन्ति' इति । ततः आरभ्य एतेषां जातिः

प्राप्तः तेन । किन्तु अनन्तरक्षणे केनापि कारणेन सः विजयफलं परित्यक्तवान् । भवान् अपि तादृशः न स्यात् इति मम इच्छा । अतः अहं तस्य विलक्षणयुवकस्य कथां विस्तरेण श्रावयामि । मार्गायासपरिहारार्थं तां श्रद्धया शृणोतु तावत्'' इति ।

अनन्तरं वेतालः कथाम् आरब्धवान् -

विन्ध्यारण्यपरिसरे पूर्वं बहूनि लघुराज्यानि आसन् । तेषु शोणपुरम् अपि अन्यतमम् । तस्य राजा कदाचित् व्याधिग्रस्तः सन् दिवं गतः । तस्य एकमात्रपुत्रः भानुमान् । पितुः मरणस्य कारणतः अल्पे एव वयसि सः सिंहासनम् आरूढवान् । सः बुद्धिमान् आसीत् । राजनीतिशास्त्रं तेन अधीतम् आसीत् । अतः राजत्वप्राप्तेः अनन्तरम् अल्पे एव काले तेन शासनव्यवहारसूक्ष्माणि

लक्ष्मणजातिः एव इति ख्याता जाता । एतज्जातीयानां वैशिष्ट्यं नाम पुरुषाः इव एतज्जातीयाः महिलाः अपि शूराः धीराः च भवन्ति इति । ताः पुरुषाः इव मृगयादक्षाः धनुर्विद्यानिपुणाः चापि भवन्ति'' इति ।

एतत् शृण्वन् एव गच्छन् भानुमान् अल्पे एव काले एकं हरिणं दृष्टवान् । सः तं लक्ष्यीकृत्य बाणं प्रयुक्तवान् । हरिणस्य चञ्चलगतेः कारणतः तदीयः बाणः लक्ष्य-च्युतः जातः । किन्तु तावता अपरदिक्तः आगतः अपरः बाणः हरिणे लग्नः । तस्मात् हरिणः गतप्राणः जातः ।

एतां घटनां दृष्ट्वा भानुमान् नितराम् आश्चर्यचकितः स्तब्धः च । अनन्तरक्षणे एव एका लक्ष्मणजातीया युवतिः हरिण-समीपम् आगता ।

तां दृष्ट्वा भानुमान् अवर्णनीयम् आश्चर्यम् आनन्दं च प्राप्तवान् । पारम्परिकवेषं धृतवती सा अनुपमसुन्दरी आसीत् । तस्याः सौन्दर्य विशेषतः प्रकाशते स्म ।

अश्वात् अवतरन्ती सा अनतिदूरे एव स्थितं भानुमन्तं दृष्टवती । तस्य दर्शनात् सा क्षणकालं दिग्भ्रान्ता । किन्तु अनन्तरक्षणे आत्मानं निगृह्य सा तं विनयेन नमस्कृतवती । वार्तालापतः ज्ञातं यत् सा लक्ष्मणजातीयानां प्रमुखस्य पुत्री चम्पा इति । सा तं स्वगृहं प्रति निमन्त्रितवती ।

भानुमतः आगमनात् चम्पायाः पिता नितरां सन्तुष्टः । 'द्वित्राणि दिनानि स्थित्वा अस्माकम् आतिथ्यं स्वीकृत्य एव गन्तव्यम्' इति सानुरोधम् उक्तवान् सः ।

भानुमान् अनन्यगतिकतया तत्र अवसत् । एतदभ्यन्तरे चम्पायाः मृदुमधुरः व्यवहारः, बुद्धिमत्ता, विनयः इत्यादयः भानुमति विशेष-प्रभावम् अजनयन् । अतः कदाचित् भानुमान् तस्याः पुरतः स्वमनसि निहितं विवाहप्रस्तावम्





अपि अस्ति तस्य । तथापि न जाने, दैवनिर्णयः कीदृशः इति'' इति ।

तदा भानुमान् हसन् उक्तवान् - ''अस्तु । अग्रे किं भविष्यति इति पश्याम'' इति ।

अनन्तरदिने स्पर्धाव्यवस्था जाता । सर्वेषु पश्यत्सु रामः धनुषः समीपं गतवान् । धनुः नमस्कृत्य उन्नीय विशेषश्रमं विनैव धनुषि ज्यां योजितवान् । चम्पा निराशतापूर्णया दृष्ट्या भानुमन्तं दृष्टवती ।

भानुमान् मन्दहासं प्रकटयन् रामं पश्यन् अवदत् - ''राम ! विजयः भवतः एव स्यात् इति अहं जानामि स्म । किन्तु सकृत् मुखं परिवृत्य पश्यतु तावत् । यां प्राप्तुं भवान् एतं विजयं प्राप्तवान्, तस्याः मुखे एतस्मात् विजयतः सन्तोषः दृश्यते वा इति । सम्यक् पश्यतु तावत्'' इति ।

उपस्थापितवान् ।

तदा चम्पा शिरः अवनमय्य उक्तवती - ''प्रभो, भगवतः अनुग्रहेण भवान् मम मनसः इच्छाम् अवगतवान् । एतत् परमसौभाग्यं मम । किन्तु रामनामकः कश्चन बन्धुः मां परिणेतुं समुत्सुकः अस्ति । गृहजनाः सर्वे एतं विवाहम् अङ्गीकृतवन्तः सन्ति अपि । किन्तु एषः विवाहः मम सम्मतः न । अस्माकं कुलसम्प्रदायः अस्ति यत् यदि काञ्चित् एकाधिकाः जनाः परिणेतुम् इच्छन्ति तर्हि स्पर्धा आयोजनीया इति । अस्माकं राममन्दिरे प्राचीनानि धनूंषि बहूनि सन्ति । एतेषु अन्यतरे यः ज्यां योजयति सः मां परिणेतुम् अधिकारी भवति । इदानीं भवान् अपि इच्छति इत्यतः रामस्य भवतः च मध्ये स्पर्धा भवेत् । रामः न तथा दृढकायः । अल्पम् अङ्गवैकल्यम्

रामः मुखं परिवृत्य दृष्टवान् । चम्पायाः मुखे गभीरा चिन्ता दृश्यते स्म । एतत् दृष्टवतः रामस्य मुखं कान्तिहीनं जातम् । सः हतोत्साहः जातः ।

सः मन्दं पदानि स्थापयन् भानुमतः समीपम् आगत्य अवदत् - ''मया स्वस्य दोषः अवगतः अस्ति । क्षन्तव्यः अहम् । सा भवतः एव पत्नी भवतु'' इति ।

भानुमान् तस्य स्कन्धे हस्तं स्थापयित्वा चम्पायाः पितरम् उद्दिश्य - ''एतत् कलियुगम् । त्रेतायुगस्य व्यवहारेषु विश्वासस्थापनं, तदनुगुणम् एव व्यवहारः च न शोभते । त्रेतायुगस्य अनुसरणात् न कस्यापि हितम् । अतः कालानुगुणं नियमाः भवता कर्तव्याः । युगानुगुणाः नियमाः रूपणीयाः । वरस्य

योग्यतां परिशील्य कन्यायाः इच्छानिच्छादिकं च पुरस्कृत्य विवाहः निर्वर्तनीयः'' इति उक्त्वा धनुः उन्नीय दूरे क्षिप्तवान् ।

वेतालः एवं कथां समाप्य अवदत् - ''राजन् ! भानुमतः व्यवहारे राजदर्पः स्फुटतया दृश्यते खलु ? रामः विकलाङ्गः सामान्यः च चेदपि तस्मिन् आत्मविश्वासः महान् आसीत् । अतः एव तेन विजयः प्राप्तः । राजा विजयिनं तं न अभिनन्दितवान्, न वा सत्कृतवान् । रामः किमर्थम् उक्तवान् यत् मया दोषः कृतः इति ? तेन किं दोषः कृतः ? विजयप्राप्तिः एव किं दोषाय ? किं सः राज्ञः भीतः सन् एवं कृतवान् ? राज्ञा किमर्थं धनुः क्षिप्तम् ? मम एतेषां प्रश्नानाम् उत्तराणि जानन् अपि यदि भवान् न वदेत् तर्हि भवतः शिरः सहस्रधा भग्नं भवेत्'' इति ।

तदा त्रिविक्रमः अवदत् - ''भानुमता युक्तम् उक्तं यत् लक्ष्मणजातेः नियमः कालानुगुणः नास्ति इति । कन्यायाः इच्छाम् अनवगत्य विवाहस्य निर्वर्तनम् अन्याय्यम् । एतत् सः आदेशद्वारा एव निवारयितुम् अशक्ष्यत् । तथा अकृत्वा सः प्रत्यक्षं दर्शितवान् यत् एतस्मात् कन्यायाः चित्तं कथम् आघातं प्राप्नोति इति । एतत् भानुमतः श्रेष्ठतां द्योतयति । रामस्य विषयं परिशीलयाम तावत् । सः जानाति स्म यत् चम्पा मां न इच्छति इति । तथापि तस्याः अनिच्छां तृणीकृत्य मिथ्याभूतम् आत्मविश्वासम् आत्मनि प्रपूर्य सः विजयं साधितवान् । भानुमान् यदा स्पष्टशब्दैः तदीयव्यवहारे अनौचित्यं दर्शितवान् तदा सः लज्जितः जातः । स्वस्य दोषम् अवगत्य सः क्षमां प्रार्थितवान् । राज्ञः उद्देशः चम्पायाः प्राप्तिमात्रं न, अपि तु लक्ष्मणजातेः व्यवहारस्य परिष्करणम् अपि । एतस्मिन् प्रसङ्गे सः तत् साधितवान् अपि । 'लक्ष्मणजातीयः कोऽपि मम सामर्थ्यविषये सन्देहवान् न स्यात्' इति विचिन्त्य सः लीलया धनुः उन्नीय क्षिप्तवान् । एवं राज्ञः व्यवहारे न किमपि अनौचित्यम्'' इति ।

एवं वदता राज्ञा मौनभङ्गः कृतः आसीत् । अतः शवान्तर्गतः वेतालः ततः अदृश्यः भूत्वा यथापूर्वं वृक्षस्य शाखाम् अवलम्बितवान् ।



पुराणकथावली - ८

# पितुः मुक्तिविधाता बालकः



कहोडः सर्वविद्यासम्पन्नः कश्चन ऋषिः । उषःकाले शीघ्रं स्नात्वा वेदपारायणं तस्य दिनचरी आसीत् । सः वेदं स्वस्य सुमधुरेण कण्ठेन स्पष्टतया यदा उच्चारयति स्म तदा समीपस्थाः ग्रामीणाः अपि तेन उच्चार्यमाणं वेदं शृण्वन्ति स्म । तस्य वेदश्रोतृषु अन्यतमा आसीत् तस्य पत्नी सुमती अपि । सा तदीयस्य प्रियविद्यागुरोः पुत्री ।

कदाचित् तस्य वेदपारायणसमये कश्चन ध्वनिः तेन श्रुतः । कहोडः चिन्तितवान् यत् कोऽपि ग्रामीणः मम प्रशंसां कृतवान् स्यात् इति । किन्तु केन तथा कृतम् इति तु तेन न ज्ञातम् । तस्य कुटीरं परितः वसन्तः द्वित्राः विद्वांसः अपि तम् अस्पष्टध्वनिं श्रुतवन्तः आसन् । एवमेव द्वित्रवारम् अभवात् । कहोडः तद्विषये अवधानं न दत्तवान् ।

किन्तु सः ध्वनिः कदाचित् तेन उच्चारितं दोषं यदा परिष्कृतवान् तदा सः आश्चर्यचकितः अभवत् । सः अनुक्षणम् उत्थाय इतस्ततः दृष्टिं प्रसारितवान् । किन्तु कोऽपि तत्र न दृष्टः । सः कुटीरात् बहिः आगत्य अपि दृष्टवान् । किन्तु न कोऽपि दृष्टः तत्र । तस्मिन् परिसरे तस्य पत्नीं विना अन्यः कोऽपि न आसीत् ।

''केन इदानीं सम्भाषणं कृतम् ? भवतः नाम किम् ? कुत्र अस्ति भवान् ?'' इति पृष्टवान् कहोडः ।

किन्तु तेन किमपि उत्तरं न प्राप्तम् । सः एतानेव प्रश्नान् पुनः पुनः उच्चारितवान् । तथापि न किमपि उत्तरम् । सहजतया सः क्रुद्धः ।

''कः भवान् माम् उपहसति ? स्वपरिचयं

तु न वदति ? किं भवान् मनुष्यः, उत देवः ? यः कोऽपि वा भवान् भवतु । मम सरलान् अष्ट प्रश्नान् न उत्तरितवान् इत्यतः भवतः शरीरे अष्टसु स्थलेषु वक्रता भवतु । अष्टावक्रो भव !'' इति तं ध्वनिं शप्तवान् कहोडऋषिः ।

केषाञ्चित् दिनानाम् अनन्तरं सः राज्ञः जनकस्य आस्थानं प्रति प्रस्थितवान् । सः राजानं धनं याचितुम् इष्टवान् । सः यदा आस्थानं प्रविष्टवान् तदा तेन 'बन्दि-पण्डितः' नाम कश्चन पण्डितः दृष्टः । सः वेदान्तादिशास्त्रेषु वादं कर्तुम् अन्यान् पण्डितान् आह्वयति स्म । किन्तु सः वादात् पूर्वं नियमान् करोति स्म । 'यः मां वादे पराजितं करोति सः धनकनकादिभिः सम्मान्यते' इति वदति स्म सः । यः वादे पराजयं प्राप्नोति तं वशीकृत्य समुद्रस्य अधः कारागृहे स्थापयति स्म सः ।

स्वस्य ज्ञानस्य, वादसामर्थ्यस्य च विषये कहोडस्य सन्देहः एव न आसीत् । तस्य महान् आत्मविश्वासः आसीत् । किन्तु दौर्भाग्यवशात् वादे कहोडः पराजितः । सः समुद्रस्य अन्तः विद्यमानं कारागारं प्रति प्रेषितः ।

जनकस्य आस्थानं प्रति कहोडमुनेः प्रस्थानस्य अनन्तरं केषुचित् एव दिनेषु सुमतिः पुत्रं प्रसूतवती । सः शिशुः अङ्गविकलत्वेन जननं प्राप्तवान् आसीत् । सः मातुः गर्भस्य अन्तः स्थित्वा एव प्रतिदिनं पितुः वेदपारायणं शृण्वन् महत् वैदिकज्ञानं सम्पादितवान् आसीत् । मातृगर्भस्य अन्तः स्थितस्य तस्य एव ध्वनिः तेन कहोडेन श्रुतः आसीत्, यं च श्रुत्वा कहोडः तं शप्तवान् अपि आसीत् ।

तस्य शिशोः शरीरे अष्टसु स्थानेषु वक्रता आसीत् इत्यतः तस्य अष्टावक्रः इति नाम जातम् ।

सुमतिः पत्युः दुर्दशां ज्ञात्वा दुःखिता



आसीत्, सा पुत्रस्य अङ्गवैकल्यं दृष्ट्वा इतोऽपि दुःखिता जाता ।

गच्छता कालेन अष्टावक्रः प्रवृद्धः । तदा सर्वेषु विषयेषु तस्य नैपुण्यं स्पष्टं जातम् । सः सर्वान् पण्डितान् अपि अतिशेते स्म ।

सः द्वादशवर्षीयः जातः । सः अपि जनकमहाराजस्य आस्थानं गत्वा वादं कर्तुं सिद्धः जातः । अहङ्कारिणं बन्दिपण्डितम् अतिशेतुं शक्ताः पण्डिताः अपि सन्ति इति प्रमाणीकर्तुम् इष्टवान् सः ।

जनकमहाराजस्य आस्थानविद्वांसः महाज्ञानिना बन्दिपण्डितेन सह वादार्थं सज्जं बालकं दृष्ट्वा नितराम् आश्चर्यचकिताः । ते चिन्तितवन्तः - एतस्य शरीरे इव मनसि अपि वक्रता अस्ति इति । किन्तु महता अन्तश्चक्षुषा युक्तः राजर्षिः जनकमहाराजः ज्ञातवान् यत् अयं कश्चन अपूर्वः बालकः इति । अतः सः तस्मै बन्दिपण्डितेन सह वादार्थम् अनुमतिं दत्तवान् ।

महता आत्मविश्वासेन युक्तः बन्दिपण्डितः निर्भीकं विकलाङ्गं च बालकं दृष्ट्वा लाघवबुद्ध्या वादम् आरब्धवान् आसीत् । किन्तु किञ्चित्कालाभ्यन्तरे एव सः अवगतवान् यत् एषः असामान्यः इति । आस्थाने विद्यमानाः सर्वे बालकस्य चातुर्यं बुद्धिमत्तां च बहुधा प्रशंसितवन्तः । अन्ते बन्दिपण्डितः पराजितः ।

''किं पारितोषिकं भवान् इच्छति ?'' इति जनकमहाराजः तं पृष्टवान् ।

''मम पिता अनुक्षणं कारागारात् मुक्तः भवतु'' इति उक्तवान् अष्टावक्रः ।

तस्य पिता अनुक्षणं मुक्तः जातः । कहोडः सर्वदा स्वसमयं भगवद्ध्याने, योगासने च उपयुक्तवान् आसीत् । अतः सः इदानीं बह्वीः सिद्धीः प्राप्तवान् आसीत् । सः पुत्रम् आशीर्भिः अनुगृह्य कस्याञ्चित् नद्यां स्नातुम् उक्तवान् । अष्टावक्रः तथैव कृतवान् । यदा सः स्नात्वा बहिरागतवान् तदा तस्य शरीरस्य वक्रताः सर्वाः अपगताः आसन् । सः सुन्दरयुवकरूपेण परिवृत्तः जातः ।

गच्छता कालेन अष्टावक्रः बहु प्रसिद्धः जातः । सः विवेकबोधकं बुद्धिप्रचोदकं च कञ्चित् ग्रन्थं रचितवान् । सः ग्रन्थः एव 'अष्टावक्रसंहिता' नाम ।






## अहो, मण्डूकनृत्यम्!!



वर्षाकाले यदा वृष्टिसूचना कापि न दृश्यते, तदा सर्वे तर्काः अर्थहीनाः भवन्ति । जनाः वृष्टिप्राप्त्यर्थं सर्वविधपूजाकर्माणि आश्रयन्ते । ओरिस्साराज्ये एतादृशमेव काचित् पूजापद्धतिः आचर्यमाणा दृश्यते, यस्याः च नाम अस्ति 'बेङ्गे नानि नाचा' इति, मण्डूकनृत्यम् इति वा । एतस्मात् वृष्टिः भविष्यति इति तेषां विश्वासः । ते मण्डूकमेकं गृहीत्वा जलघटे स्थापयन्ति । घटः काष्ठखण्डस्य मध्यभागे बध्यते । द्वौ पुरुषौ तं काष्ठदण्डं वहतः । अन्ये जनाः बालाः च तौ अनुसरन्ति । शोभायात्रा समीपस्थस्य देवालयस्य पुरतः स्थगिता भवति । तत्र पूजा प्रवर्तते । ततः मण्डूकः नद्यां कासारे वा परित्यज्यते । सः वृष्टिम् आनेष्यति इत्यत्र न कस्यापि संशयः !!

## मेयांग्ग्रामस्य मन्त्रवादिनः

पक्त्वा भर्जयित्वा मेदोरसादिकं संयोज्य खादनाय मीनः आनीयते । बुभुक्षितः अतिथिः तस्य खादनाय हस्तं प्रसारयति । तदा सः मेदोरसे सन्तोषेण विहरन्तं मीनं तत्र पश्यति । तदा तस्य मुखं कथं विवर्णं जातं स्यात् इति भवन्तः एव ऊहन्ताम् । अस्सां-राज्यस्य नौगाङ्ग्-उपमण्डले विद्यमानस्य मेगांग्ग्रामस्य मन्त्रवादिनां विषये श्रूयमाणासु कथासु अन्यतमा एषा । पूर्वम् एषः ग्रामः भयङ्करैः मन्त्रवादिभिः पूर्णः आसीत् इति श्रूयते । केभ्यश्चित् शतकेभ्यः पूर्वम् एवमपि श्रूयते स्म यत् यदा अस्सां-राज्यस्य उपरि आक्रमणं भवति स्म तदा सैन्यस्य योद्धारः बहवः अकस्मात् अदृश्याः भवन्ति स्म इति ।





# सत्यवतः अपेक्षा

भूपतिः कोट्यधिपतिः । तस्य पत्नी भानुमती । बहूनि वर्षाणि यावत् तयोः अपत्यं न आसीत् । अतः तौ नितरां खिन्नौ आस्ताम् । कस्यचित् संन्यासिनः कथनस्य अनुगुणं तौ प्रतिवेशिग्रामे स्थिते विश्वनाथ-मन्दिरे पूजाः कारितवन्तौ । तस्मात् भानुमती गर्भवती भूत्वा पुत्रं प्रसूतवती ।

पुत्रस्य तृतीयजन्मदिनोत्सवस्य पूर्वदिने भानुमती पतिम् उक्तवती – ''श्वः उषसि एव विश्वनाथमन्दिरं गत्वा पूजां कारयाम'' इति ।

''कुतः श्वः इति ? प्रतिवर्षम् अपि मन्दिरे पूजां कारयाम । भगवतः आशीर्वादः श्रेयसे एव'' इति अवदत् भूपतिः ।

अनन्तरदिने उषसि एव स्नात्वा वृषभशकटे उपविश्य तौ विश्वनाथमन्दिरं गतवन्तौ । यदा पूजा प्रचलन्ती आसीत् तदा भूपतिः भानुमती च नेत्रे निमील्य भगवतः ध्यानं कुर्वन्तौ आस्ताम् । तदा एव बहिः कश्चन कोलाहलः श्रुतः । तस्मात् आकृष्टः तयोः पुत्रः विना शब्दं बहिः गतवान् । मन्दिरात् बहिः सरोवरः आसीत् । तस्मिन् कमलपुष्पाणि आसन् । तैः आकृष्टः बालः सोपानानि अवतीर्य जलसमीपं गतवान् । तदवसरे पादस्खलनात् सः जले पतितः । तत्समये कश्चन भिक्षुकः जले निमज्जन्तं बालं दृष्ट्वा धावन् गत्वा सरोवरं प्रविश्य बालं रक्षितवान् ।

एतां घटनां श्रुत्वा भानुमती भूपतिः च धावन्तौ बहिः आगतवन्तौ । भानुमती पुत्रम् उन्नीय दृढम् आलिङ्ग्य रोदनं कृतवती । ततः सा भिक्षुकस्य समीपं गत्वा – ''भवता मम पुत्रः रक्षितः । किं नाम भवतः ? भवान् यत् अपेक्षते तत् ददामि । किम् अपेक्षते

भवान् ?'' इति पृष्टवती ।

तदा भिक्षुकः अवदत् - ''मम नाम सत्यवान् इति । मया महत् कार्यं किमपि न कृतम् । यदि मम भिक्षापात्रं सरोवरे पतितं स्यात् तर्हि अपि एवम् एव अकरिष्यं खलु ? अतः मम कार्यस्य विशेषमहत्त्वं किमपि नास्ति'' इति ।

''भवता कृतस्य कार्यस्य महत्त्वं भवान् न जानीयात् । वयं तत् जानीमः खलु ? अस्माकं तृप्त्यै वयं किमपि दातुम् इच्छामः । अतः किमपि याचतु'' इति ।



तदा सत्यवान् क्षणकालं विचिन्त्य अवदत् - ''आ बहोः कालात् मम मनसि काचित् इच्छा जागर्ति - एकं दिनं वा मया सर्वजनसम्मानः प्राप्तव्यः इति । अतः एतदर्थं यदि भवन्तः व्यवस्थां कुर्युः तर्हि अहम् उपकृतः भवेयम्'' इति ।

''भवतः इच्छां निश्चयेन पूरयिष्यामः । भवान् अस्माभिः सह अस्मद्ग्रामम् आगच्छतु तावत्'' इति अवदत् भूपतिः ।

भूपतेः पुत्रस्य जन्मदिनस्य निमित्तं वणिजः, धनिकाः, बान्धवाः च अभिनन्दनाय आगतवन्तः । तदा भूपतिः सत्यवन्तम् अमूल्यैः वस्त्रैः भूषयित्वा सर्वेषां पुरतः आनीय - ''एतस्य सत्यवान् इति नाम । एषः मम मित्रम् । वाणिज्ये दक्षः एषः । नगरे एतस्य विशेषख्यातिः अस्ति'' इति उक्तवान् ।

आगताः सर्वे विनयेन तं नमस्कृतवन्तः । आढ्यानां मध्ये सः गाम्भीर्येण सञ्चारं कृतवान् । सायङ्काले सत्यवतः निमित्तम् एव कश्चन भोजोत्सवः अपि व्यवस्थापितः । ग्रामीणाः सर्वे तत्र भागम् अवहन् ।

जनाः भूपतिविषये यथा तथैव सत्यवतः विषये अपि आदरं प्रकटितवन्तः । केचन धनिकाः तम् उक्तवन्तः - ''आर्य ! भवता अस्मद्गृहं प्रति अपि अवश्यम् आगत्य वयं कृतार्थीकरणीयाः'' इति ।

मध्यरात्रपर्यन्तम् एते कार्यक्रमाः प्रवृत्ताः । तेषां समाप्तेः अनन्तरं सत्यवान् भूपतिना दत्तं वस्त्रम् अपनीय स्वस्य वस्त्रं धृतवान् । ततः भूपतिम् उक्तवान् - ''महाशय ! मम जीवनस्य काचित् अपूर्वा इच्छा अद्य सफलतां गता । अद्यावधि जनाः मां 'रे, अरे' इत्यादिभिः पदैः एव सम्बोधयन्ति स्म । तेषां वाणीषु आदरस्य लेशोऽपि न भवति स्म । अद्य तु सर्वे मम नाम महता आदरेण उच्चारितवन्तः ।

जीवने कदाचित् वा जनादरः प्राप्तव्यः इति या इच्छा स्वप्नायते स्म सा अद्य साकारतां गता । भवतः अनुग्रहेण एव एतत् सम्पन्नम् । अद्य अहं नितरां सन्तुष्टोऽस्मि'' इति ।

तदा भूपतिः हसन् अपृच्छत् - ''जनाः भवन्तं किमर्थम् अनादरेण पश्यन्ति स्म इति किं भवान् जानाति ?'' इति ।

''अहं तु भिक्षुकः । अतः जनाः माम् आदरपात्रं न मन्यन्ते'' इति अवदत् सत्यवान् ।

''भिक्षुकत्वमात्रम् एव अनादरस्य कारणं न । भवान् दृढकायः अस्ति । नीरोगः अस्ति । किमपि अङ्गवैकल्यं नास्ति भवतः । परिश्रमं कर्तुं सर्वथा अर्हः भवान् । तथापि भिक्षायाचनं क्रियते भवता । मन्दिरस्य सोपानेषु उपविश्य भिक्षायाचनम् एव यदि भवतः प्रियं तर्हि जनादरः प्राप्तव्यः इति स्वप्नः किमर्थं दृश्यते भवता ? भवादृशं दृढकायं भिक्षां याचन्तं दृष्ट्वा जनाः यदि अनादरं प्रकटयेयुः तर्हि किम् आश्चर्यं तत्र ?'' इति अवदत् भूपतिः ।

सत्यवान् वस्तुस्थितिम् अवगतवान् । सः क्षीणस्वरेण उक्तवान् - ''मह्यं कार्यं कः दद्यात् ? मयि किमपि कौशलं नास्ति'' इति ।

''भोः, अलं व्याजकथनेन । कौशलम् अनुभवात् सम्पाद्यते, न तु जन्मना । यदि भवान् इच्छति तर्हि कार्यम् अहम् एव ददामि । श्वः आरभ्य भवान् मम वस्त्रापणे कार्यं करोतु'' इति अवदत् भूपतिः ।

''अस्तु श्रीमन् ! तथैव करिष्यामि'' इति अङ्गीकारपूर्वकम् उक्तवान् सत्यवान् ।

पार्श्वप्रकोष्ठे स्थित्वा भानुमती एतत् सर्वं श्रुतवती आसीत् । सा पतिम् उक्तवती - ''एकमात्रपुत्रं रक्षता तेन महान् उपकारः कृतः । तादृशम् आपणे कर्मकरत्वेन नियोक्तुम् इच्छति खलु भवान् ! तस्मै दशलक्षं रूप्यकाणि दत्तानि चेदपि अपर्याप्तम् एव'' इति ।

तदा भूपतिः हसन् उक्तवान् - ''अलम् उद्वेगेन । सः बहूनि वर्षाणि यावत् आलस्येन कालं यापितवान् । अतः आदौ तस्य अकर्मण्यता निवारणीया । यदा सः श्रमशीलः भवति तदा वस्त्रापणम् एव तदधीनं करवाम । यः श्रमं न जानाति, यश्च परावलम्बी भवति सः धनम् आपणं वा प्राप्य अपि सुखेन स्थातुं न अर्हति'' इति । पत्युः दूरदर्शितां दृष्ट्वा भानुमती नितरां प्रसन्ना जाता ।



# वार्ताविशेषः

## चतुर्णां मासानाम् अनन्तरं रक्षणम्




रिचड वाम् फामः ६२ वर्षीयः वियेट्नाम्मूलीयः अमेरिकावासी । सः कदाचित् एकदिनप्रयाणयोग्यां नौकाम् आरुह्य क्यालिफोर्नियाप्रदेशे समुद्रं प्रविष्टवान् । किन्तु दौर्भाग्यवशात् तेन चतुरः मासान् समुद्रे एव स्थातव्यम् अभवत् । चतुर्णां मासानाम् अनन्तरं ततः ४००० कि.मी.दूरे कोस्टारियाप्रदेशे अमेरिकाजलसैन्यीयैः सः प्राप्तः । सः प्रयाणावसरे कूर्मान्, मीनान्, जालप्रसारणात् प्राप्तान् पक्षिणः च खादन् दिनानि यापयति स्म ।

## मङ्गलग्रहं प्रति मूषकः

मङ्गलग्रहं प्रति गमनाय अद्यावधि भूमौ अन्तरिक्षे च बहवः प्रयोगाः कृताः । किन्तु ते न सफलाः । षट् मासान् यावत् निरन्तरप्रयाणं कृतं चेत् मङ्गलग्रहः प्राप्येत इति तर्क्यते । विज्ञानिनां संशोधनं प्रचलति - मङ्गलग्रहे मानववसतिः भवितुम् अर्हति उत न इति विषये । यतः गुरुत्वाकर्षणं भूमौ यावत् ततः ३८ % न्यूनं भवति तत्र । आस्ट्रेलियीयाः अमेरिकीयाः च विज्ञानिनः सम्भूय मसाचूट्स्-तान्त्रिकसंस्थाने विविधान् प्रयोगान् कुर्वन्तः सन्ति २००३ तमे वर्षे मङ्गलं प्रति मूषकं प्रेषयितुम् । यदि मङ्गलग्रहे मूषकः जीवेत् तर्हि मानवः अपि जीवेत् इति तेषाम् आशयः ।





# न कृतं दोषस्मारणम्

भूषणः गोपपुरनिवासी । सः कदाचित् अस्वास्थ्यं प्राप्य योग्यचिकित्सायाः अनन्तरं स्वस्थः जातः । वैद्यः सूचितवान् यत् उत्तमस्वास्थ्यलाभाय कानिचन दिनानि सीतापुरे वासः वरम् इति । एतदनुगुणं भूषणः सीतापुरं गत्वा बन्धुगृहे वासं कृतवान् ।

भूषणः प्रतिदिनं विपणिं गच्छति स्म । सायङ्काले उत्तमः वायुः वाति स्म । अतः पादाभ्यां विपणिं प्रति गमनागमनं तस्मै रोचते स्म । वैद्यः सूचितवान् आसीत् यत् पादाभ्यां सञ्चारः, दाडिमफलसेवनं च स्वास्थ्यवर्धकम् इति । अतः भूषणः विपण्यां दाडिमफलानि क्रीणाति स्म ।

किन्तु तेन कदापि उत्तमानि दाडिमफलानि न प्राप्यन्ते स्म । कानिचन अपक्वानि भवन्ति, पुनः कानिचन रुचिहीनानि । अतः प्रतिदिनं सः एकैकम् आपणं गच्छति स्म दाडिमफलक्रयणाय ।

एवम् एव सप्ताहः अतीतः । तदनन्तरं कदाचित् सः यदा विपण्यां सञ्चरन् आसीत् तदा कस्यचित् तरुणविक्रेतुः स्वरः श्रुतः ।

सः तरुणः उच्चस्वरेण वदति स्म – ''भोः भोः, आगच्छन्तु । अत्युत्तमानि फलानि । सकृत् मत्तः फलं क्रीतवान् जनः अनन्तरदिने अपि मत्समीपम् एव आगमिष्यति इति तु निश्चितम्'' इति ।

भूषणः तस्य समीपं गत्वा अवदत् – ''सर्वे वणिजः एवम् एव वदन्ति । किन्तु तैः अनुत्तमानि एव विक्रीयन्ते'' इति ।

''अन्ये तथा कुर्युः नाम । अहं तु तादृशः न । विश्वासार्हता एव मम वैशिष्ट्यम् ।

उत्तमानि फलानि मया आनीयन्ते, योग्येन मूल्येन विक्रीयन्ते च । सकृत् क्रीत्वा मम व्यवहारस्य शुद्धतां जानातु'' इति उक्तवान् सः तरुणः ।

भूषणेन पृष्टः सः स्वनाम सूचितवान् ईश्वरः इति । तदीयानि दाडिमानि उत्तमानि इव दृश्यन्ते स्म । अतः भूषणः तस्मात् एव फलानि क्रीतवान् ।

वस्तुतः अपि तेन विक्रीतानि फलानि उत्तमानि एव आसन् । आश्रयदातारः बान्धवाः अपि तानि खादित्वा उक्तवन्तः यत् एतादृशानि स्वादूनि फलानि अस्माभिः अन्यत्र न दृष्टानि इति । तस्मात् दिनात् भूषणः ईश्वरात् एव फलानां क्रयणम् आरब्धवान् । ईश्वरः अपि कदापि अनुत्तमानि फलानि न दत्तवान् ।

मासः अतीतः । भूषणस्य स्वास्थ्ये विशेषप्रगतिः जाता । अतः सः निश्चितवान् यत् इतः परम् अहं स्वग्रामं गमिष्यामि इति । प्रस्थानदिने सः ईश्वरं कृतज्ञतां वक्तुं, ततः कानिचन फलानि क्रीत्वा ग्रामं नेतुं च इच्छन् विपणिं गतवान् । तस्मिन् दिने ईश्वरस्य आपणे यानि फलानि आसन् तानि अनुत्तमानि आसन् ।

''बाह्यदर्शनात् भासेत यत् एतानि अनुत्तमानि इति, तथापि एतानि वस्तुतः स्वर्णायन्ते गुणेन । अतः क्रयणविषये द्वैधीभावः मास्तु'' इति उक्त्वा फलानां तोलने उद्युक्तः अभवत् ईश्वरः ।

प्रतिदिनं यत् मूल्यं दीयते तदेव मूल्यम् अद्यापि दातुं न इष्टवान् भूषणः । अतः सः



ईश्वरम् अवदत् - ''मार्गे कश्चन सुहृत् मिलितः । तस्मै ऋणं दत्तं मया । कोषे अधिकं धनं नास्ति । अतः फलानां तोलनं मास्तु'' इति ।

''भवान् तु ज्ञातपूर्वः ग्राहकः । अद्य कोषे यावत् अस्ति तावत् एव ददातु । अवशिष्टं श्वः ददातु । तत्र किमर्थं चिन्ता ?'' इति अवदत् ईश्वरः ।

''भवता दत्तानि फलानि उत्तमानि सन्ति चेदेव श्वः धनं दास्यामि, अन्यथा न'' इति फलानि परिशीलयन् उक्तवान् भूषणः ।

''स्वर्णतुल्यानि इमानि कदापि अल्प-गुणानि न भवन्ति श्रीमन्'' इति हसन् उक्तवान् ईश्वरः ।

यद्यपि भूषणः नगरत्यागविचारम् ईश्वरं वक्तुम् इच्छति स्म, तथापि सः तं विचारं न

अवदत् । 'यदि फलानि उत्तमानि स्युः तर्हि एव बान्धवान् वदामि अवशिष्टं धनं यच्छन्तु इति । फलानि अनुत्तमानि चेत् धनम् अदत्त्वा एव ग्रामं गमिष्यामि' इति निश्चित्य सः अर्ध-मूल्यम् एव दत्त्वा फलानि स्वीकृत्य बन्धुगृहं प्रत्यागतवान् । तत्र फलानि परीक्षितानि । तेषु एकम् अपि उत्तमं न आसीत् ।

'ईश्वराय अद्य यावत् धनं दत्तं तदेव अधिकम् । अतः श्वः पुनः धनं न दास्यामि' इति अचिन्तयत् भूषणः ।

ईश्वरः यत् वञ्चितवान् तद्विषये भूषणः खिन्नः । अव-शिष्टस्य धनस्य अदानात् ईश्वरः यत् खिद्येत तद्विषये अल्पा अपि चिन्ता न आसीत् तस्य ।

अनन्तरदिने गोपपुरगमनाय सः अश्व-शकटम् आरूढवान् । अन्ये त्रिचतुराः अपि शकटे आसन् । भूषणः शकटस्य अन्तिमभागे उपविष्टः आसीत् ।

किञ्चिद्दूरं गमनानन्तरं कश्चन शकटं स्थगितवान् । ''पादाभ्याम् एव गौरीपुरं गच्छन् आसम् । किन्तु पादे व्रणः जातः । अतः माम् अपि नयतु कृपया । गोपपुरात् पूर्वमेव गौरीपुरम् अस्ति । तत्र अवतरामि । किन्तु भाटकं दातुं नाहं शक्तः । मम समीपे धनं नास्ति । उपकारं करोतु कृपया'' इति शाकटिकम् अवदत् सः ।

ध्वनिश्रवणात् भूषणः अचिन्तयत् यत् श्रुतपूर्वः अयं कण्ठस्वरः इति । सः अवदत् - ''पुराणम् एव श्रावितं, किन्तु स्वनाम न श्रावितम् एव खलु भवता ! कः भवान् ?'' इति ।

''मम नाम ईश्वरः इति । सीतापुरे फलविक्रयणं करोमि स्म । मम ग्रामस्य गौरीपुरस्य भूस्वामी स्वस्य वाटिकायां मह्यम् उद्योगं दातुं सिद्धः अस्ति । अतः स्वग्रामं गच्छन् अस्मि'' इति अवदत् सः ।

भूषणः कण्ठं प्रसार्य तम् अपश्यत् । शकटम् आरोहन् ईश्वरः अपि भूषणम् अपश्यत् । उभौ अपि परस्परम् अभिज्ञात-वन्तौ । भूषणः न अवदत् यत् दाडिमानि उत्तमानि न आसन् इति । ईश्वरः अपि दातव्यस्य धनस्य दानं न स्मारितवान् । स्वस्य दोषं स्वयं जानन्तौ तौ कथं वा अन्यं दोषं स्मारयितुम् अर्हेताम् ?





# सहस्ररूप्यकाणां ग्रन्थिः

चम्पानगरे चौर्यं दिने दिने प्रवर्धमानम् आसीत् । एवं हि श्रूयते स्म यत् नगररक्षकः धनसेनः एव चोरेभ्यः उत्कोचं स्वीकरोति इति । एतस्याः वार्तायाः यथार्थतां ज्ञातुं राजा छद्मवेषं धृत्वा नगरे अटनम् आरब्धवान् । कदाचित् सः एकस्यां धर्मशालायां वासं कृतवान् । रात्रौ धर्मशालायाः स्वामी अवदत् – ''महाशय, भवतः समीपे धनं किमपि अस्ति चेत् मदधीनं करोतु । अहं योग्यां रक्षणव्यवस्थां कारयामि । नगरे चौर्यम् अधिकतया प्रवर्तमानम् अस्ति'' इति ।

''मम समीपे धनग्रन्थिः तु अस्ति । तत्र सहस्रं रूप्यकाणि अपि सन्ति । तस्य रक्षणे अहं समर्थः अस्मि अपि'' इति उक्त्वा राजा स्वप्रकोष्ठं प्रति गतवान् ।

यात्रिकवेषधारी कश्चन चोरः एतां वार्तां श्रुतवान् । सः मध्यरात्रे राज्ञः प्रकोष्ठं प्रविश्य धनग्रन्थिम् अपहृत्य ततः पलायितवान् ।

अनन्तरदिने राज्ञा एषः विषयः ज्ञातः । सः धर्मशालायाः स्वामिनं दृष्ट्वा अवदत् – ''मम धनग्रन्थेः चौर्यं जातम् अस्ति । अहं कस्यचित् कार्यविशेषस्य निमित्तं कुत्रापि गच्छन् अस्मि । रात्रौ एव प्रत्यागमनं मम । अतः भवान् नगररक्षकं दृष्ट्वा मम धनग्रन्थेः चौर्यस्य वार्तां निवेदयतु'' इति ।

तदा धर्मशालायाः स्वामी अवदत् – ''महाशय ! एतस्य देशस्य राजा उत्तमः, किन्तु नगररक्षकः तु महादुष्टः । अहं भवन्तं ह्यः रात्रौ एव जागरितवान् आसम् । मत्समीपे धनस्य रक्षणाय योग्या व्यवस्था अस्ति । अतः मत्समीपस्थं धनं चोराः स्प्रष्टुं न अर्हन्ति । किन्तु यात्रिकाणां समीपे स्थितस्य



धनस्य चौर्यस्य निवारणे अहम् असमर्थः । नगररक्षकं चौर्यवार्तां निवेदयामः चेत् अपि न किमपि प्रयोजनम्'' इति ।

''भवतु नाम । तथापि भवान् नगररक्षकं चौर्यवार्तां वदतु । नगररक्षके विश्वासः अस्ति मम'' इति उक्त्वा ततः निर्गतवान् राजा ।

रात्रौ यदा सः प्रत्यागतः तदा धर्मशालायाः स्वामी निराशतां प्रदर्शयन् - ''मया नगर-रक्षकः उक्तः । किन्तु न किमपि फलं सिद्धम्'' इति अवदत् ।

राजा तत् श्रुत्वा मौनेन स्वप्रकोष्ठं गतवान् । किञ्चित्कालानन्तरं कश्चन अज्ञातपूर्वः प्रकोष्ठं प्रविश्य अवदत् - ''भोः, वञ्चकः भवान् ।''

राजा आश्चर्ययुक्तस्वरेण अवदत् - ''अहं भवन्तम् ऐदम्प्राथम्येन पश्यामि । एवं स्थिते मम वञ्चकता भवता कथं ज्ञाता ?'' इति ।

''ह्यः रात्रौ मया भवतः धनग्रन्थिः चोरितः । ग्रन्थिः तु महान् आसीत्, किन्तु तत्र शतं रूप्यकाणि, शिलाखण्डादीनि च आसन् । तथापि भवान् नगररक्षकं प्रति वार्तां प्रेषितवान् अस्ति यत् सहस्रं रूप्यकाणि चोरितानि इति'' इति अवदत् अज्ञातपूर्वः ।

राजा तं तीक्ष्णदृष्ट्या पश्यन् - ''भवान् चौर्यं कृत्वा अपि निर्भीकतया मत्समीपम् आगतः अस्ति । एतादृशः भवान् किं वा न कुर्यात् ?'' इति अवदत् ।

''भोः, व्यर्थवार्तालापार्थं नास्ति मम समयः । इदानीम् एव मया सह आगत्य भवता नगररक्षकः वक्तव्यः यत् चोरिते ग्रन्थौ शतरूप्यकमात्रम् एव आसीत् इति'' इति अवदत् चोरः ।

''यदि मया तथा न उच्येत ?''

चोरः एकां तीक्ष्णां छुरिकां निष्कास्य दर्शयन् - ''एषा छुरिका भवतः प्राणान् अपहरिष्यति'' इति अवदत् ।

राजा चातुर्येण प्रहृत्य चोरस्य हस्ते स्थितां छुरिकां पातयित्वा चोरस्य हस्तौ तत्पृष्ठभागे योजयित्वा बद्ध्वा - ''इदानीं भवन्तं नगर-रक्षकसमीपं नेष्यामि'' इति अवदत् ।

''अस्तु, मां नगररक्षकाधीनं करोतु । किन्तु भवता सः अवश्यं वक्तव्यः यत् ग्रन्थौ सहस्रं न, शतम् एव रूप्यकाणि आसन् इति । अन्यथा नगररक्षकः मां पीडयिष्यति बहुधा'' इति अवदत् चोरः ।

''चौर्यनिमित्तं भवान् गृहीतः । किन्तु तद्विषये भीतिः नास्ति भवतः । किन्तु धनग्रन्थौ कियत् धनम् आसीत् इति मया वक्तव्यम् इति

विषये भवतः आतङ्कः । विलक्षणः व्यवहारः भवतः'' इति अवदत् राजा ।

तदा चोरः दीर्घं निश्श्वसन् - ''अहं चोरः अस्मि । तथापि मया नगररक्षकस्य पुरतः स्वस्य निष्कपटता प्रमाणीकरणीया एव । धनग्रन्थौ शतरूप्यकमात्रम् एव आसीत् इति यत् उक्तं तस्य कारणतः मया कशाप्रहाराः प्राप्ताः । मम पृष्ठं पश्यतु तावत्'' इति उक्त्वा वस्त्रम् अपनीय पृष्ठं दर्शितवान् ।

चोरस्य पृष्ठभागे कशाप्रहारस्य चिह्नानि स्फुटतया दृश्यन्ते स्म ।

''नगररक्षकः स्वकर्तव्यं सम्यक् एव पालयन् अस्ति । चौर्यं कृतवता भवता दण्डनं प्राप्तव्यम् एव खलु ?'' इति अवदत् राजा ।

''भवतः तु शतं रूप्यकाणि चोरितानि । अहं द्विशतं रूप्यकाणि दास्यामि । भवता नगररक्षकः सत्यं वक्तव्यः । मम निष्कपटता-विषये यदि तस्य सन्देहः भवेत् तर्हि मम जीवनं कष्टकरं स्यात्'' इति अवदत् चोरः ।

एतत् श्रुत्वा राजा आश्चर्यम् अनुभवन् यदा अनुरोधपूर्वकं स्पष्टीकरणं पृष्टवान् तदा चोरः अवदत् - ''चौर्यं समाप्य नगररक्षकस्य समीपं गत्वा अहम् उक्तवान् यत् ग्रन्थौ शतं रूप्यकाणि आसन् इति । ततः ५० रूप्यकाणि तस्मै दत्तानि । किन्तु धर्म-शालायाः प्रमुखः गत्वा सहस्रं रूप्यकाणि चोरितानि इति यदा अवदत् तदा नगररक्षकः माम् आनाय्य सार्धचतुश्शतं रूप्यकाणि न दत्तानि भवता इति वदन् कशाप्रहारं कारित-वान् । स्वस्य निष्कपटतायाः प्रमाणीकरणाय मया भवत्समीपम् आगतम्'' इति ।

इदानीं राज्ञा सर्वं ज्ञातम् । सः स्वस्य राजत्वं प्रदर्श्य चोरम् आदिष्टवान् यत् इतः परम् एवं चौर्यं न करणीयम् इति ।

ततः सः नगररक्षकस्य बन्धनं कारित-वान् । नगररक्षकः स्वस्य निरपराधतां यदा प्रतिपादयितुम् उद्युक्तः तदा राजा - ''मया सर्वं ज्ञायते । चोराः निष्कपटाः भवेयुः इति भवान् अपेक्षते । किन्तु भवति सा निष्कपटता अणुमात्रेण अपि नास्ति । अतः किञ्चित्कालं यावत् कारागारे वसन् चोरेभ्यः निष्कपटताम् अभ्यस्यतु'' इति उक्त्वा तं कारागारं प्रति प्रेषितवान् । तस्मात् दिनात् चम्पानगरे चौर्य-प्रसङ्गाः न्यूनाः जाताः ।



# हिमाचलप्रदेशीया जानपदकथा

पर्वतयुक्तः हिमाचलप्रदेशः पश्चिम-हिमालयस्य हृदयभागे अस्ति । अत्र न्यूनतमौन्नत्यं ३५० मीटरात्मकम्, अधिकतमौन्नत्यं च ६,९७५मीटरात्मकम् । स्वातन्त्र्यानन्तरं पर्वतराज्यानां संयोजनं कृतम् । प्राथमिकस्तरे शिम्लां परितः विद्यमानानि राज्यानि एव अत्र अन्तर्भूतानि आसन् । १९६६ तमवर्षस्य नवेम्बरमासस्य प्रथमे दिनाङ्के पञ्जाबराज्यस्य पर्वतप्रदेशाः अपि अत्र योजिताः । १९७१ तमवर्षस्य जनवरीमासस्य २५ तमे दिनाङ्के हिमाचल-प्रदेशः समग्रराज्यत्वेन स्थानं प्राप्नोत् ।

सटलेज्, रावि, बियास्, परबाति इत्यादयः एतस्य राज्यस्य मुख्यभूताः नद्यः । राज्ये बहवः विशालसरोवराः अपि सन्ति ।

राज्यस्य विस्तारः ५५,६७६ कि.मी., जनसंख्या च ६,०७७,२४८. एतस्य राज्यस्य उत्तरसीमायां जम्मुकाश्मीरोत्तर-प्रदेशौ, दक्षिणे हरियाणा, पश्चिमे पञ्जाब, पूर्वदिशि चैनादेशः च स्थिताः सन्ति ।

एतस्य राजधानी शिम्ला । हिन्दी एतस्य राज्यभाषा । अन्याः बह्व्यः भाषाः अपि उपयुज्यन्ते अत्र ।

## भूतस्य वस्त्रम्

लाहौल्प्रदेशस्य पुयकरग्रामे फुञ्चोकः नाम कश्चन ज्योतिषिकः वसति स्म । तस्य विषये ग्रामे सर्वेषाम् आदरः आसीत् । सुदूरात् प्रदेशात् अपि जनाः तस्य मेलनार्थम् आगच्छन्ति स्म । सः जातकानां दर्शने ग्रहादीनां परिणामावगमने च नितरां समर्थः आसीत् । सः ग्रामदेवतायाः मुख्यवक्ता अपि आसीत् । सा देवता बहुधा तस्य कण्ठद्वारा वदन्ती ग्रामजनानां कृते मार्गदर्शनं करोति स्म । सः ग्रामजनानां पूर्वजानां सम्पर्कं साधयित्वा तेषां मार्गदर्शनं ददत् बहुधा साहाय्यं करोति स्म ।

एकस्मिन् दिने पार्श्वस्थस्य सतिङ्गिग्रामस्य प्रमुखः फुञ्चोकाय एकं सन्देशं प्रेषितवान् ।





सन्देशवाहकः एकां विचित्रां कथाम् उक्तवान् – ''अस्माकं ग्रामे कस्माच्चित् चटुलभूतात् वयं कष्टम् अनुभवन्तः स्मः'' इति उक्त्वा फुञ्चोकस्य पत्न्या दत्तं 'चाङ्ग'रसं पीत्वा पुनः अवदत् – ''सः भूतः अस्माकं वस्तूनि चोरयति । धेनूः गोष्ठात् विमोचयति । केदारे अस्तव्यस्तताम् आनयति । घटद्रोण्यादीनि भञ्जयति । सङ्गृहीतानि काष्ठानि ज्वालयति । बालान् च भाययति । बहूनि दिनानि यावत् वयं तस्य भूतस्य अकार्याणि शान्ततया सोढवन्तः, यतः तस्मात् अस्मासु कस्यापि साक्षात् हानिः जाताः न आसीत् । सः बालसदृशः चटुलः इति अस्माभिः चिन्तितम् आसीत् । परन्तु इदानीं परिस्थितिः तथा नास्ति । इतः परं सोढुं न शक्या तस्य पीडा ।''

फुञ्चोकः पृष्टवान् – ''किं जातम् इदानीम् ?'' इति ।

''भूतेन ह्यः यत् कृतं तत् असह्यम् अवमानकरं च आसीत्'' इति उक्तवान् सन्देशवाहकः । सः नितराम् उद्विग्नः भीतः इव भासते स्म ।

यदा फुञ्चोकः तं वक्तुम् अनुरोधं कृतवान् तदा सः भयेन मन्दस्वरेण उक्तवान् – ''ह्यः ग्रामप्रमुखः पञ्चायतनस्थले आसीत् । सः अन्ये प्रमुखाः च न्यायनिर्णयार्थं तत्र सम्मिलिताः आसन् । ग्रामजनाः वीक्षणार्थम् आगताः

## 'चम्बा'कलायुतानि वस्त्राणि



'चम्बा'प्रकारकाणि 'रुमाल'पदवाच्यानि वस्त्राणि हिमाचलप्रदेशस्य वैशिष्ट्यद्योतकानि । एतस्मिन् वस्त्रे 'चम्बा'नामकेन कलाप्रकारेण निर्मिता व्यूतिः विशेषतः दृश्यते । एतत् रुमालवस्त्रं करवस्त्रमिव दृश्यते आकारेण, तथापि उपयोगः तु बहुविधः । पुरुषाः अलङ्कारवस्त्ररूपेण एतत् स्कन्धे धरन्ति । महिलाश्च उत्तरीयरूपेण एतस्य उपयोगं कुर्वन्ति । वध्वलङ्कारे तु एतत् वस्त्रं भवेत् एव । एतद्विना वध्वलङ्कारः अपूर्णः भवति ।

एतदतिरिच्य हिमाचलप्रदेशे आच्छादक-राङ्कव-कटादयः अपि निर्मीयन्ते । चम्बाकलाप्रकारः यथा तथैव कङ्गा-गुम्पाप्रकाराः अपि अत्र विशेषतः दृश्यन्ते व्यवहारे ।

आसन् । तदा अकस्मात् ग्रामप्रमुखस्य श्मश्रु अदृश्यताम् अगच्छत् ।....''

''हा हन्त ! कथमेतत् ?'' फुञ्चोकः साश्चर्यम् अवदत् ।

''तस्यैव भूतस्य कार्यम् आसीत् एतत् । सः ग्रामप्रमुखस्य श्मश्रु खादति स्म । वयं सर्वे तत् असहायकतया पश्यन्तः आस्म । अस्मासु केचन तं ग्रहीतुं धावितवन्तः । परन्तु ते न शक्ताः । अस्माकं ज्येष्ठः इदानीं श्मश्रुविहीनः जातः अस्ति । तस्य दुःखं वर्णनातीतम् इदानीम् । अस्माकं ग्रामात् एतस्य भूतस्य उच्चाटनं भवान् कुर्यात् इति वयम् इच्छामः'' इति अवदत् सः सन्देशवाहकः ।

फुञ्चोकः स्वकार्यार्थम् आवश्यकानि सस्य-गुच्छादीनि, स्थूलदण्डम्, अन्यानि लघुवस्तूनि च स्वीकृत्य सन्देशवाहकेन सह प्रस्थितवान् ।



अचिरादेव तौ सतिङ्ग्रिग्रामं प्राप्तवन्तौ ।

ग्रामप्रमुखस्य गृहं खेदावृतं चिन्ताक्रान्तं च दृश्यते स्म । कुटुम्बजनाः खेदेन निश्श्वसन्तः अश्रूणि स्रावयन्तः उपविष्टाः आसन् । तदा तौ ग्रामप्रमुखस्य समीपं गतवन्तौ । ग्रामप्रमुखः इतोऽपि आघातात् अवमानात् च बहिः नागतः आसीत् । यदा सः ज्योतिषिकाय आसन्दं ददत् आसीत् तदा तस्य ओष्ठौ कम्पमानौ आस्ताम् । सः अतिथये पानीयदानार्थं सूचितवान् ।

सः फुञ्चोकम् उक्तवान् – ''मम जनः भवन्तं सर्वम् उक्तवान् स्यात् । तस्य भूतस्य किमपि वा करणीयम् । ह्यः यः मम श्मश्रु अखादत्, सः श्वः कस्यचित् केशान् खादेत्, अन्यस्मिन् दिने कस्यचित् नासिकाम् अपि गिलेत् । एतत् सोढुम् अशक्यम्'' इति ।

तदा फुञ्चोकः – ''अहं तं भूतम् उच्चाटयामि एव'' इति उक्त्वा स्वबन्धान् उद्घाट्य एकम् उत्तरीयं शिरसि बद्धवान्, स्वमायादण्डं भ्रामयन् कार्यप्रवृत्तः जातः च । सः हुङ्कारं कुर्वन् अग्निं प्रज्वाल्य किञ्चन चूर्णम् अग्नौ स्थापितवान् । तस्मात् सर्वत्र धूमः प्रसृतः । सर्वेऽपि क्षुवस्य आरम्भं कृतवन्तः । तदनन्तरं सः सूच्या स्वकपोले वेधनं कुर्वन् नेत्रतारके भ्रामयन् मन्त्रोच्चारणं कृतवान् ।

तदा सः भूतः दृष्टिगोचरः अभवत् । सः अग्निना आकृष्टः इव आगत्य स्ववस्त्रं छिन्नं कृत्वा अग्न्यभिमुखं क्षिप्त्वा आकाशदिशि धावितवान् ।

सर्वेऽपि समाधानेन उत्थितवन्तः । अन्ततो गत्वा भूतेन अदृश्यं गतम् आसीत् ।

# सेवफलानि



हिमाचलप्रदेशे सुवर्णवर्णीयानि सेवफलानि प्राप्यन्ते बाहुल्येन । अमेरिकीयः धर्मगुरुः सत्यानन्दः (स्यामुवल् एवन्स्) हिमाचलप्रदेशे ऐदम्प्राथम्येन सेवफलकृषिम् आरब्धवान् ।

सः १९०४ तमे वर्षे स्वदेशतः एतानि सस्याङ्कुराणि आनीतवान् । अद्य सेवकृषिप्रधाने एतस्मिन् राज्ये कोटघर्प्रदेशः उत्तमसेवफलानि आधिक्येन उत्पादयति ।

काङ्ग्रा-थानेदारप्रभृतिषु खातप्रदेशेषु अपि सेववाटिकाः बाहुल्येन दृश्यन्ते । पर्वतप्रदेशेषु चायकृषिः अपि प्रचलन्ती दृश्यते प्राधान्येन ।

भूतस्य वस्त्रम् अग्नौ न पतितम् । फुञ्चोकः तत् गृहीतवान् । सः अग्निं निवार्य तत् वस्त्रं गृहीत्वा ततः प्रस्थातुम् उद्युक्तः । सन्तुष्टः ग्रामप्रमुखः फुञ्चोकस्य कृते बहुविधानि उपायनानि प्रभूतं धनं च कृतज्ञतापूर्वकम् अर्पितवान् । फुञ्चोकः भूतस्य वस्त्रेण सह सर्वाणि उपायनानि बद्ध्वा स्वगृहं प्रति प्रस्थितवान् ।

यदा सः पर्वतप्रदेशे गच्छन् आसीत् तदा काचित् आकृतिः तस्य नेत्रयोः पुरतः प्रत्यक्षा जाता । सः आसीत् सतिङ्ग्रिग्रामस्य भूतः । ''मम वस्त्रं प्रत्यर्पयतु । यदि दास्यति तर्हि अहं भवतः साहाय्यं करिष्यामि'' इति परियाचनाम् अकरोत् सः ।

''न दीयते । भवतः साहाय्यम् अपि मास्तु मम'' इति उक्त्वा बन्धं सुदृढं गृहीतवान् फुञ्चोकः । 'भूतस्य एतत् वस्त्रं मुख्यभूतम् अस्ति इति भाति । अन्यथा एवं परियाचनं न अकरिष्यत् सः' इति अचिन्तयत् फुञ्चोकः ।

''तत् मम एकमेव वस्त्रम् । तद्विना अहं घनीभूतः भविष्यामि'' इति भूतेन उक्तम् । परन्तु फुञ्चोकः तत्र न विश्वसितवान् । अन्यस्य विशेषकारणस्य निमित्तं भूतः तत् वस्त्रं प्राप्तुम् इच्छति स्म । अन्ते सत्यं बहिरागतम् । ''अहं सर्वदा भवतः सेवकः भवितुं न इच्छामि । मम वस्त्रं प्रत्यर्पयतु कृपया'' इति दुःखेन उक्तं भूतेन ।

तदा फुञ्चोकः उक्तवान् - ''अहा, एवं तर्हि एतत् वस्त्रं मम समीपे भवति चेत् भवान् मम सेवकः भवति । एवं ननु ? तर्हि अहम् एतत् स्थापयामि, भवता मम कार्याणि करणीयानि'' इति । भूतः दीर्घं निश्श्वस्य ततः निर्गतः ।

फुञ्चोकः नवोत्साहेन अग्रे पदं स्थापितवान् । गृहम् आगत्य सः सर्वविधानि उपायनानि पत्न्यै अर्पितवान् । परन्तु तत् वस्त्रम् एकम्



अट्टे निगूहितवान्, पत्नीं न उक्तवान् च ।

इदानीं भूतः तस्य अधीनः आसीत् । यदा किमपि कार्यम् आपतति तदा सः तम् आह्वयति स्म । शैत्यकाले भूतः तस्य गृहभूमौ पतितं हिमराशिम् अपसारयति स्म । पर्वतस्य अधोभागं गत्वा जलम् आनयति स्म । वसन्तकाले तस्य क्षेत्रे कृषिं करोति स्म । फलप्राप्तिपर्यन्तं क्षेत्ररक्षणं करोति स्म । सक्थुसज्जीकरणम् अपि तस्यैव कार्यम् आसीत् । ग्रीष्मकाले गभीरपर्वतप्रदेशात् काष्ठानि अपि तेनैव आनेतव्यानि आसन् ।

इदानीं फुञ्चोकः किमपि कार्यं न करोति स्म । सः सुखेन विश्रान्तिसुखम् अनुभवन् भूतेन सर्वाणि कार्याणि कारयति स्म । सः स्थूलः अलसः च जायमानः आसीत् । परन्तु भूतः दिने दिने कृशः जातः । फुञ्चोकः स्वस्य वृत्तिकर्तव्यानि अपि त्यक्तवान् । यतः भूतस्य कारणतः तस्य वाटिकाक्षेत्रात् एव प्रभूतं प्राप्यते स्म खलु ।

भूतः तदा तदा तस्य समीपं गत्वा प्रार्थयति स्म - वस्त्रं प्रतिददातु इति । परन्तु फुञ्चोकः तत् दृष्ट्वा केवलं हसति स्म ।

एकदा फुञ्चोकः मुख्यधार्मिककार्यार्थं पार्श्वग्रामं प्रति आहूतः । तत् बहु गौरवार्हकार्यम् आसीत् इति कारणतः सः निराकर्तुम् अशक्तः । भूतः एतस्य अवकाशस्य उपयोगं प्राप्तुम् ऐच्छत् । सः तस्मात् ग्रामात् प्रस्थाय वृद्धं गोम्पुभूतं द्रष्टुम् अगच्छत् । गोम्पुभूतः भूतेषु मुख्यतमः । प्रपञ्चे स्थितानां सर्वविधानां भूतसमस्यानाम् अपि परिहारः तस्य समीपे आसीत् ।

यदा सतिङ्ग्भिूतः स्वदुःखकथाम् अवदत् तदा गोम्पुभूतः अवदत् - ''यदा स्वमितिम् अतिक्रम्य व्यवह्रियते तदा एवमेव भवति । सर्वेषां पुरतः भवान् ग्रामप्रमुखस्य श्मश्रु किमर्थं खादितवान् ? भूताः क्रीडितुं शक्नुवन्ति । सः तेषाम् अधिकारः । परन्तु यदि मितिम् अतिरिच्य चेष्ट्यते तर्हि तन्निमित्तं दण्डः दातव्यः एव'' इति । एतत् श्रुत्वा सतिङ्ग्भिूतः रुदन् वचनं दत्तवान् यत् इतः परं कदापि एतादृशम् अकार्यं न करिष्यामि इति । तदा गोम्पुभूतः अवदत् - '' अस्तु, वस्त्रप्राप्तिविषये साहाय्यं करिष्यामि'' इति ।

गोम्पुभूतः 'गह्रि'वेषं धृत्वा फुञ्चोकस्य गृहम् अगच्छत् । सः फुञ्चोकस्य पत्नीम् अवदत् - ''अहं फुञ्चोकस्य पुरातनमित्रम् । परन्तु आवां बहुकालतः न मिलितौ । अद्य एतेन मार्गेण गच्छन् तं स्मृत्वा अहम् अत्र आगतः'' इति ।

''मम पतिः ग्रामात् बहिः गतवान् अस्ति ।

भवान् अद्य अत्रैव तिष्ठतु । मम पतिः श्वः आगमिष्यति'' इति उक्तवती फुश्नोकस्य पत्नी ।

''नैव शक्यम् । सर्वथा न शक्यम् । मया कस्यचित् विवाहस्य निमित्तं गन्तव्यम् अस्ति । अतः अद्य स्थातुं न शक्नोमि । चिन्ता नास्ति । पुनः प्रतिगमनसमये अहं तेन मिलामि । परन्तु... एकं साहाय्यम् आवश्यकम् आसीत् । बहुभ्यः वर्षेभ्यः पूर्वम् अहम् एकं वस्त्रं तस्य समीपे त्यक्तवान् आसम् । तस्य महती आवश्यकता अस्ति इदानीम् । तत् भवती अन्विष्य दातुं शक्नोति किम् ?'' इति अवदत् गोम्पुभूतः ।

फुश्नोकस्य पत्नी तस्मै स्वादिष्टं भोजनं परिविष्टवती । अनन्तरं वस्त्रार्थं गृहे सर्वत्र अन्विष्टवती । अन्ते तया एकत्र तादृशं वस्त्रं दृष्टम् । सा जानाति स्म यत् तत् तस्याः पत्युः न इति । अतः सा तत् नीत्वा गोम्पुभूताय दत्तवती ।



## दर्शनयोग्यानि स्थलानि

हिमाचलप्रदेशस्य एकं परमाद्भुतं स्थलम् अस्ति 'कुलुखातः' । तस्य अन्यत् नाम अस्ति – 'देवानां खातः' इति ।

राजधानी शिम्ला अत्रत्यम् अन्यदेकम् आकर्षकं केन्द्रम् । एतस्य पर्वतप्रदेशं परितः अन्तः च अनेकानि दर्शनयोग्यानि रोचकाणि स्थलानि सन्ति । 'डाल्हौसि' इत्यपरः प्रदेशोऽपि बहून् जनान् आकर्षति ।

तत् दृष्ट्वा गोम्पुभूतः नितरां सन्तुष्टः जातः । सर्वेषां भूतानां वस्त्रं समानं भवति इति कारणतः तत् सतिङ्क्भूतस्य वस्त्रम् इति तेन ज्ञातम् ।

''एतदेव मदीयं वस्त्रम् । अनन्ताः धन्यवादाः'' इति उक्त्वा गोम्पुभूतः तत् वस्त्रं स्वीकृत्य शीघ्रमेव ततः प्रस्थितवान् ।

सः तत् सतिङ्क्भूताय प्रत्यर्पितवान् । सतिङ्क्भूतः तत् प्राप्य महान्तं सन्तोषम् अनुभवन् – ''इतः परम् अहं कस्मैचित् अपि मनुष्याय कष्टं न दास्यामि'' इति प्रतिज्ञाय ततः अदृश्यः जातः ।

यदा फुश्नोकः गृहं प्रत्यागतः तदा तस्य पत्नी पुरातनमित्रस्य आगमनवार्तां निवेदितवती । यदा सा वस्त्रविषयम् उक्तवती तदा सः ज्ञातवान् यत् वञ्चितः अभवम् अहम् इति । गतस्य विषये रोदनेन किं वा प्राप्येत ? इदानीं तेन पुनः क्षेत्रकार्यं, जलानयनं, हिमनिष्कासनं, कष्टदायकभूतानाम् उच्चाटनं, जातकपरिशीलनम् इत्यादीनि कार्याणि करणीयानि अभवन् ।

# भारतम् अवगम्यताम्

भारतदेशः ५५ वर्षेभ्यः पूर्वं स्वतन्त्रः जातः । प्रजाप्रभुत्वव्यवस्था उत्तमा आसीत् चेदपि देशेन उन्नत्यवनत्यादयः बहवः अनुभुताः । तस्मिन् कालखण्डे याः घटनाः प्रवृत्ताः ताः अधिकृत्य अधः केचन प्रश्नाः सज्जीकृताः सन्ति । उत्तरं दातुं प्रयतन्ताम् ।

१. राष्ट्रपिता महात्मा गान्धिः १९४८ तमे वर्षे जनवरीमासस्य ३० तमे दिनाङ्के मारितः । मरणस्य दशभ्यः दिनेभ्यः पूर्वं सः काञ्चित् भयोत्पादकघटनां सम्मुखीकृतवान् । सा का ?

२. १९४९ तमवर्षस्य जनवरीमासस्य १५ दिनाङ्कं भारतसैनिकाः रक्तपत्रदिनत्वेन आचरन्ति स्म । तस्य दिनस्य महत्त्वं किम् ?

३. प्रथमं सार्वजनिकनिर्वाचनं १९५१तमवर्षस्य अक्टोबर्तः १९५२ तमवर्षस्य फेब्रवरीपर्यन्तं प्रवृत्तम् । तस्मिन् निर्वाचने कति पक्षाः भागं गृहीतवन्तः ? तेषु कति राष्ट्रियपक्षाः आसन् ?

४. यः वित्तसचिवः बहुवारम् आयव्ययपत्रप्रकटनस्य गौरवं प्राप्तवान्, सः कतिवारं तथा प्रकटितवान् ?

५. भारतस्य प्रसिद्धे पर्वणि कुम्भमेलायाम् ऐदम्प्राथम्येन पादमुद्रामरणरूपः विघ्नः जातः । सः कदा जातः ? अस्य विघ्नस्य कारणतः कति जनाः दुःखभागिनः सञ्जाताः ?

६. भारतस्य अत्यन्तगौरवयुता प्रशस्तिः नाम 'भारतरत्न'प्रशस्तिः । सा प्रथमवारं कदा दत्ता ? प्रथमप्रशस्तिपुरस्कृताः के ?

७. प्रथमा एशियन्क्रीडा १९५१ तमे वर्षे प्रवृत्ता । तत्र भारतस्य प्रथमसुवर्णपदकविजेता कः ? कस्यां स्पर्धायाम् तेन तत् प्राप्तम् ?

८. भारतस्य प्रथमः क्रिस्तधर्मगुरुः कः ? सः कदा तत् दायित्वं स्वीकृतवान् ?

९. भारतस्य बृहत्तमसङ्घटितराज्यम् १९४८ वर्षस्य मेमासे रूपितं जातम् । तत् कथं सम्बोध्यते स्म ? तस्य राजधानी का आसीत् ?

१०. भारतस्य द्वौ अध्यात्मिकनायकौ १९५० तमे वर्षे एप्रिल्मासे डिसेम्बर्मासे च दिवङ्गतौ । तौ कौ ?

*(उत्तराणि अग्रिमे मासे)*

### 'नवेम्बर्'मासस्य प्रश्नानाम् उत्तराणि

*१. लेटर्स् फ्राम् ए फादर् टु हिस् डाटर् ।*

*२. १९८७ तमे वर्षे अगस्ट्मासस्य १४ दिनाङ्कस्य मध्यरात्रे लोकसभाभवनस्य केन्द्रीयसभागारे भारतस्य स्वतन्त्रताम् अभिलक्ष्य कृते भाषणे ।*

*३. विजयलक्ष्मीपण्डितवर्या । उत्तरप्रदेशस्य, यश्च पूर्वं संयुक्तसंस्थानत्वेन निर्दिश्यते स्म ।*

*४. मिथ्या ।*

*५. वानरसेना इति । राष्ट्रियनायकानां मध्ये वार्तानां नयनायनं तस्य कार्यम् आसीत् ।*

*६. भारतपाकिस्थानयुद्धस्य (डिसेम्बर्-मासस्य पूर्वार्धे प्रवृत्तस्य) निमित्तम् ।*



# विघ्नेश्वरः

विनायकचतुर्थ्याः सन्ध्यासमये विघ्नेश्वरः परमशुभ्रतया विराजमानं चन्द्रम् आकाशे पश्यन् अग्रे गच्छन् आसीत् । तस्य उदरं खाद्यैः पूर्णम् आसीत् । तेन सह मूषकः अपि आसीत् । विघ्नेश्वरस्य ललाटे श्वेतचन्दनं द्वितीयाचन्द्ररूपेण धृतं सत् शोभते स्म ।

चन्द्रं पश्यतः गच्छतः विघ्नेश्वरस्य पादस्य अङ्गुलिः शिलया घट्टिता जाता । अतः विघ्नेश्वरः अधोमुखतया भूमौ अपतत् । एतस्मात् तदीयम् उदरं भग्नम् । उदरस्थानि खाद्यादीनि तत्र सर्वत्र विकीर्णानि । एतत् दृष्ट्वा आकाशस्थः चन्द्रः मुक्तहृदयम् अहसत् । तावता तत्र आगताः देवाः सर्पचर्मणा विनायकस्य उदरं सीवितवन्तः ।

चन्द्रविषये पार्वती नितरां क्रुद्धा । सा चन्द्राय शापं दत्तवती – ''विनायकचतुर्थीदिने यः भवन्तं पश्यति सः निन्दापात्रतां गच्छतु'' इति । तस्मात् दिनात् जनाः विनायकचतुर्थीचन्द्रं न पश्यन्ति कथमपि ।

द्वापरयुगस्य आरम्भः जातः । श्रीकृष्णः देवकीगर्भे वसुदेवात् जन्म प्राप्य गोकुले यशोदायाः गृहे अवर्धत । सः बाल्ये एव पूतना-शकटासुर-तृणावर्तादीन् राक्षसान् संहृतवान् ।

तच्च विनायकचतुर्थीदिनम् । यशोदा क्षीरदोहनं कुर्वती आसीत् । बालकृष्णः यशोदायाः पृष्ठतः स्थित्वा अवनम्य क्षीरे दृश्यमानं चन्द्रस्य प्रतिबिम्बम् अपश्यत् । ततः सः करताडनं कुर्वन् –''अम्ब ! चन्द्रः ! क्षीरस्य अन्तः सुन्दरः चन्द्रः !!'' इति सन्तोषेण अवदत् ।

एतत् श्रुत्वा यशोदा खेदेन – ''वत्स !



किम् एतत् कृतं भवता ? अनावश्यकतया निन्दापात्रता प्राप्तव्या अभवत् खलु भवता !'' इति अवदत् ।

''निन्दा नाम का अम्ब ?'' इति अपृच्छत् बालकृष्णः ।

''भवन्तं जनाः विना कारणम् एव चोरं मंस्यन्ते'' इति उक्तवती यशोदा ।

''अम्ब ! भवती चिन्तां मा करोतु । अहं दुग्धनवनीतादीनां चौर्यं करिष्यामि । तदा महानिन्दा मया न प्राप्येत खलु'' इति हसन् अपृच्छत् कृष्णः ।

''अये दुष्ट ! भवतः मुखे ब्रह्माण्डं पततु नाम'' इति प्रीत्या उक्तवती यशोदा ।

''अम्ब ! किं भवत्या ब्रह्माण्डं दृष्टम् ?'' इति अपृच्छत् कृष्णः ।

''ब्रह्माण्डविचारं त्यजतु नाम । ज्येष्ठत्व-प्राप्तेः अनन्तरमपि भवता चोरत्वारोपणं सम्मुखीकरणीयं स्यात्'' इति उक्तवती यशोदा ।

''एवं तर्हि मया तदा पुनरपि एकवारं चन्द्रः द्रष्टव्यः भवेत्'' इति अवदत् कृष्णः ।

''ज्येष्ठत्वप्राप्तेः अनन्तरं चतुर्थीचन्द्रदर्शनं महते अपराधाय'' इति अवदत् यशोदा । ततः सा स्वगतम् अवदत् - 'हे विघ्नेश्वर ! अयं अज्ञानवशात् चन्द्रस्य च्छायां दृष्टवान् अस्ति । एषः लघ्वपराधः क्षन्तव्यः' इति ।

अनन्तरदिने बलरामः धावन् आगत्य यशोदाम् अवदत् - ''अम्ब ! कृष्णः मृत्तिकां खादितवान् अस्ति । सत्यम् एतत् अम्ब ! भवती एव प्रत्यक्षं परिशीलयतु तावत्'' इति ।

एतत् श्रुत्वा यशोदा धावन्ती कृष्णस्य समीपं गतवती । तत्समये कृष्णः मृत्तिकाराशिं कुर्वन् क्रीडन् आसीत् । यशोदा तस्य कर्णं गृहीत्वा - ''अये कृष्ण ! मुखम् उद्घाटयतु तावत्'' इति आदिशत् ।

''अम्ब ! मां ताडयितुं भवतीं प्रेरयन् कश्चित् मिथ्यादोषारोपणं कृतवान् इति भाति । ह्यः चन्द्रदर्शनं यत् कृतं तस्य फलं स्यात् एतत् । अहं मृत्तिकया मोदकलड्डुकादिकं सज्जीकुर्वन् अस्मि । मृत्तिकया निर्मिताय विनायकाय मृत्तिकामयानि वस्तूनि एव खलु समर्पणीयानि'' इति अवदत् कृष्णः ।

यशोदा स्वकपोलौ हस्ताभ्यां ताडयन्ती अवदत् - ''वत्स ! शान्तं पापम् । प्रतिहतम् अमङ्गलम् । एवं न वक्तव्यं वत्स ! मृत्तिकया शिलया वा निर्मिता भवेत् देवमूर्तिः । किन्तु देवांशः तत्र सन्निहितः तु भवति एव । भगवन् ! विघ्नेश्वर ! मुग्धस्य एतस्य वचनस्य विषये

कोपं न प्रदर्शयतु कृपया'' इति ।

''अम्ब ! अग्रिमायां विनायकचतुर्थ्यां भवती मोदकलड्डुकादीनि निर्मातु । तानि विनायकः खादेत् उत न इति अहं परीक्षां करिष्यामि । सः न खादिष्यति चेत् अहं खादयिष्यामि'' इति ।

''तदस्तु, आदौ भवान् स्वमुखम् उद्घाटयतु तावत्'' इति आदिष्टवती यशोदा । कृष्णः मुखम् उद्घाटितवान् । यशोदा तदीयमुखस्य अन्तः दृष्टिं प्रसारितवती ।

अनन्तरक्षणे एव सा नितरां दिग्भ्रान्ता । यतः तया तत्र ब्रह्माण्डं, नक्षत्रमण्डलं, सूर्य-चन्द्रसमुद्रपर्वतादयः, समस्तजीविनः चापि दृष्टाः । 'मया यत् दृश्यते तत् वास्तविकम् उत स्वप्नः' इति चिन्तयन्ती सा नेत्रे मार्जितवती । 'विनायकः अन्यः देवो वा मां मायाजाले न पातितवान् स्यात् खलु ?' इति चिन्तयन्ती सा परितः दृष्टिं प्रसारितवती । यशोदायाः आश्चर्यान्वितदृष्टिं दृष्ट्वा बहवः बालकाः तत्र सम्मिलिताः । ते करताडनं कुर्वन्तः कोलाहलं कृतवन्तः । स्तम्भस्य पृष्ठतः स्थित्वा बल-रामः हसन् आसीत् ।

कृष्णः यशोदायाः मुखं पश्यन् - ''अम्ब ! किं मम मुखे मृत्तिका दृष्टा ? सम्यक् पश्यतु अम्ब !'' इति अवदत् ।

यशोदा तु तस्य मुखे समस्तदेवताः पश्यति स्म । तत्र कृष्णः मुरलीं वादयति स्म, विनायकश्च ताण्डवनृत्यं करोति स्म । कृष्णः कालियसर्पस्य उपरि नृत्यम् अपि करोति स्म । कालियः कृष्णं ग्रहीतुं प्रयतमानः आसीत् । एतत् दृश्यं दृष्ट्वा यशोदा मूर्च्छावस्थां गतवती ।



यदा सा सचेतना जाता तदा तां परितः गोपिकाः स्थिताः आसन् आतङ्केन । ताः पृष्टवती सा - ''मम किं जातम् ?'' इति ।

सा किमपि न स्मरति स्म । किमपि न घटितं चेत् या स्थितिः स्यात् सा एव स्थितिः आसीत् तस्याः । तदा गोपिकाः उक्तवत्यः - ''आत्मनि किं भवति इति भवती स्वयं न जानाति ? एवं स्थिते वयं तत् कथं वा जानीयाम ? वयं तु जानीमः यत् अस्माकं गृहेषु चौर्यं जातम् अस्ति इति । चोरः तु भवत्याः पुत्रः एव । नवनीतं, दधि, क्षीरं, घृतम् इत्यादिकं गोपालबालेभ्यः वानरगणाय च वितरन् भवत्याः पुत्रः प्रत्यक्षं दृष्टः अस्माभिः'' इति ।

तदा यशोदा कोपेन - ''किम् एतानि वस्तूनि मम गृहे न सन्ति इति भवत्यः चिन्तयन्ति ? समग्रे गोकुले यावत् स्यात् तस्य



द्विगुणितं स्यात् मम गृहे । तस्मिन् पूर्णाधिकारः कृष्णस्य एव । एवं स्थिते सः भवतीनां गृहं प्रति चौर्याय किमर्थं वा आगच्छेत् ? इदानीं भवत्यः इतः निर्गच्छन्तु'' इति उक्त्वा सर्वाः गोपिकाः ततः प्रेषितवती ।

तासां निर्गमनस्य अनन्तरं कृष्णः मन्दं पदानि स्थापयन् मातुः समीपमागत्य अपृच्छत् - ''अम्ब ! किं प्रवर्तते अत्र ?'' इति ।

''मया यथा उक्तं तथैव प्रवृत्तम् इदानीम् । एताः सर्वाः भवति चौर्यदोषम् आरोपितवत्यः सन्ति'' इति उक्तवती यशोदा ।

''अम्ब ! ताभिः वस्तुतः दोषः न आरोपितः । तत् कार्यं मया कृतम् एव'' इति हसन् अवदत् कृष्णः ।

एतत् श्रुत्वा यशोदा नितरां कुपिता । सा तम् एकया दृढया रज्ज्वा उलूखले बद्धवती ।

कृष्णः तम् उलूखलम् एव आकर्षन् अग्रे गतवान् । वृक्षद्वयस्य मध्ये गत्वा उलूखलं बलात् अग्रे आकृष्टवान् । एतेन तौ वृक्षौ समूलम् उत्पाटितौ जातौ । तस्मात् कारणात् उभौ गन्धर्वौ तयोः वृक्षयोः निर्गत्य शापमुक्तौ सन्तौ कृष्णस्य स्तुतिं कुर्वन्तौ आकाशं गत्वा अदृश्यौ जातौ ।

एकं वर्षम् अतीतम् । विनायकचतुर्थी पुनः आगता । नन्दः बहुवर्णरञ्जितां विनायकमूर्तिं सज्जीकृतवान् । यशोदा पिष्टं सज्जीकृत्य तेन घृतमयं मोदकलड्डुकादिकं सज्जीकृतवती ।

नैवेद्यार्थं सर्वाणि वस्तूनि स्वीकृत्य यशोदा पूजागृहं गतवती । तत्र सर्वाणि वस्तूनि व्यवस्थिततया स्थापयित्वा द्वारं पिधाय ततः निर्गतवती च ।

कृष्णः मन्दगत्या गत्वा पूजागृहस्य द्वारम् उद्घाट्य अन्तः प्रविश्य पुनरपि द्वारं पिधाय विनायकमूर्तेः पुरतः स्थित्वा - ''भ्रातः ! सर्वान् पदार्थान् खादतु रे'' इति सानुरोधम् उक्तवान् । विघ्नेश्वरः तान् पदार्थान् शुण्डया उन्नीय - ''हे कृष्ण ! मया भवतः हस्ते यानि वस्तूनि स्थाप्यन्ते तानि भवता एव खादनीयानि'' इति वदन् कृष्णस्य मुखे बहून् पदार्थान् स्थापितवान् । एवं क्रमेण सर्वाः स्थालिकाः रिक्ताः जाताः ।

पूजामन्दिरस्य समीपम् आगता यशोदा गवाक्षेण अन्तः दृष्टिं प्रसार्य तत्रत्यं दृश्यं दृष्टवती । एतस्य दर्शनात् सा नितराम् आश्चर्यचकिता । तस्याः शरीरे स्वेदधारा उत्पन्ना । सा आत्मानं कथमपि निगृह्य स्वगतम् उक्तवती - ''हन्त ! अहं भ्रमगर्ते पतिता इव । मम नेत्रयोः पुरतः मायाजालं प्रसृतम् इव

भाति'' इति ।

ततः सा द्वारम् उद्घाट्य पूजामन्दिरं प्रविष्टवती । तत्र विनायकमूर्तिः तु यथापूर्वम् आसीत् । नैवेद्यार्थं स्थापिताः पदार्थाः तत्र न दृश्यन्ते स्म । कृष्णः तु नेत्रे विशालीकृत्य स्थितवान् आसीत् तत्र ।

''अये, दुष्ट ! विनायकस्य पूजातः पूर्वम् एव भवान् सर्वान् नैवेद्यपदार्थान् खादितवान् खलु !'' इति वदन्ती यशोदा कृष्णं द्वित्रवारं ताडितवती पृष्ठे । तदा रुदन् कृष्णः कालिन्दी-तडागं प्रति धावितवन् । तम् अनुसृत्य यशोदा अपि धावितवती । तौ अनुसरन्तः गोपी-गोपादयः सर्वे धावनं कृतवन्तः ।

कालिन्दीतडागे वसतः कालियनागस्य कारणतः गोकुलवासिनः सर्वे महत् कष्टम् अनुभवन्तः आसन् । कृष्णः कालिन्दी-तडागस्य तीरे प्रवृद्धस्य वृक्षस्य शाखाम् आरुह्य तडागे उत्कूर्दितवान् । सः नागस्य फणानाम् उपरि एव पतितः । किङ्किणीनादं कुर्वन् सः कालियसर्पस्य फणानाम् उपरि ताण्डवनृत्यम् एव कृतवान् । एतस्मात् कालियः रक्तं वमन् श्रान्तः जातः । एवं कालियमर्दनं समाप्तम् । तस्मात् कालियः शापात् विमुक्तः अपि जातः । सः स्वस्य पुत्रीः पातालवासिनः वासुकेः अधीनाः कृत-वान् । ततः कालियरूपं परित्यज्य विघ्नः विघ्नेश्वरस्य अधीनः जातः ।

पुत्रम् उन्नीय गृहम् आगतवती यशोदा ।



आश्चर्यं नाम पूजामन्दिरे स्थापिताः नैवेद्यपदार्थाः इदानीं यथापूर्वं दृश्यन्ते !

पुत्रः विना कारणं ताडितः मया इति पश्चात्तापम् अनुभूतवती यशोदा ।

''अम्ब ! विलम्बः जायमानः अस्ति । भवती पूजां करोतु अम्ब !'' इति मातरम् अवदत् बालकृष्णः ।

ततः यशोदा नन्दकृष्णाभ्यां विनायकस्य पूजां कारितवती । नैवेद्यपदार्थाः सर्वे गोकुले वितीर्णाः । ते च अमृतसमानाः आसन् । तेषां प्राप्त्या गोकुलवासिनः नितरां सन्तुष्टाः ।

कृष्णः वृद्धिं गतः । कदाचित् सः गोवर्धनपर्वतम् उद्धृत्य गाः गोकुलवासिनः च मुसलधारावृष्ट्या रक्षन् इन्द्रस्य गर्वभङ्गं कृतवान् ।

एकदा सः गोवर्धनपर्वतसमीपे गवां चारणे मग्नः आसीत् । तदा कश्चन पुरुषः मृदङ्गं हस्तेन वहन् तत्र आगतः ।

सः कृष्णम् अपृच्छत् - ''मया श्रुतं यत् कृष्णनामकः कश्चन अत्र वसति, सः च अतिमनोहरतया वेणुं वादयति इति । अहं तदीयं मुरलीनादं श्रोतुम् अत्र आगतः । किं भवान् तं मह्यं दर्शयितुं शक्नुयात् ?'' इति ।

''अहम् एव सः कृष्णः । भवान् तु महासङ्गीतविद्वान् इव भाति । कृपया स्वपरिचयं वदतु'' इति करौ योजयित्वा अवदत् कृष्णः ।

''मां जनाः मृदङ्गकेसरी इति निर्दिशन्ति । अहं दक्षिणभारतनिवासी । मथुरां प्रति गच्छन् अस्मि । तत्र धनुर्यागः प्रचलिष्यति इति मया श्रुतम् । तदवसरे मृदङ्गकौशलं प्रदर्शनीयम् इति मम इच्छा'' इति अवदत् सः मृदङ्गविद्वान् ।

तस्य पादयोः रत्नखचितः वलयः, हस्तयोः सिंहमुखाकृतियुक्तम् आभूषणं, कण्ठे सुवर्णमणिभिः युक्तः हारः, कर्णयोः महाकारकौ कुण्डलौ च आसन् । मृदङ्गम् अपि रत्नखचितैः सुवर्णपदकैः अलङ्कृतमासीत् ।

कृष्णः एतत्सर्वं दृष्ट्वा आश्चर्यं प्रकटयन् उक्तवान् - ''महानुभाव ! अहं तु गवां पालकः कश्चन गोपालकः अस्मि । मम मुरली तु सामान्येन वेणुदण्डेन निर्मिता । दक्षिणभारतात् आगतः भवान् तु महासङ्गीतविद्वान् । अहं तु साधारणरागस्य आलापनं कुर्वन् गवां चारणं च कुर्वन् सामान्यगायकः'' इति ।

- *(अनुवर्तते)*





# भवान्याः अनुग्रहः

भारतीपुरे भुक्कः नाम कश्चन चोरः आसीत् । सः सर्वदा चौर्यं न करोति स्म । कृषिसमये धान्यादिकर्तनसमये च क्षेत्रे एव कार्यं करोति स्म सः । वेतनं लभ्यते चेत् कार्यम् एव अवलम्बते स्म । विवाहितः सः पुत्रवान् अपि । तस्य पत्नी एतस्य चौर्यकार्यं जानाति स्म । किन्तु पुत्रः तद्विषये किमपि न जानाति स्म ।

भुक्कः यदा चौर्यं कर्तुं गच्छति तदा प्रत्यागमनसमये भवान्याः मन्दिरं गत्वा तत्र प्रार्थयति स्म – ''मातः ! अहं यदा अनन्यगतिकः भवामि तदा एव चौर्यं करोमि । अतः भवती अन्यैः दत्तम् उपायनं यथा स्वीकरोति तथैव मया दत्तम् अपि स्वीकरोतु । मम आये चतुर्थांशम् अहं भवत्यै सर्वदा अर्पयिष्यामि । एकः अंशः मह्यम्, अपरः अंशः मम पत्न्यै, अन्यः अंशः मम पुत्राय, अवशिष्टः चतुर्थः अंशः भवत्यै । अहं भवतीमपि मम परिवारे अन्यतमां भावयामि । अतः भवती अपायेभ्यः मां रक्षेत् । चौर्यसमये अहं यथा अन्यैः गृहीतः न भवेयं तथा भवती मां रक्षेत्'' इति ।

तस्य जीवनम् एवमेव सुखेन प्रचलति स्म । अतः तस्य मनसि कदापि विचारः न आगतः एव यत् मया पापं क्रियमाणम् अस्ति इति ।

एकदा सः चौर्यं कर्तुं नगरं गतः । नगरे एकत्र वाल्मीकिनामकं नाटकं प्रचलत् आसीत् । वाल्मीकेः पूर्वतनं नाम अपि भुक्कः इत्येव आसीत् । 'मम नाम अपि भुक्कः एव खलु' इति चिन्तयतः भुक्कस्य मनसि कुतूहलम् उत्पन्नं यत् अग्रे किं भविष्यति इति ज्ञातव्यम् इति । अतः सः श्रद्धया तत् नाटकम् अपश्यत् । नाटके भुक्कः वाल्मीकिरूपेण परिवृत्तः सन् रामायणस्य कर्ता अपि अभवत् इति यत् तत् तस्मिन् महत् आश्चर्यम् अजनयत् ।



पुत्रेण नारायणेन सह भवानीमन्दिरं गतवती । भवानीं प्रार्थयन्ती सा - ''अम्ब ! मम पतिः यद्यपि चौर्यं करोति स्म तथापि तत् धनिकत्वं प्राप्तुं, भवनं निर्मातुं वा न आसीत् । दारिद्र्यं तं चौर्ये प्रवर्तयति स्म । सः भवत्याः महाभक्तः । अतः सः शीघ्रं यथा प्रत्यगच्छेत् तथा करोतु कृपया'' इति वदन्ती रोदनम् आरब्धवती ।

मातुः वचनेन पुत्रः नारायणः विस्मितः जातः । तथैव स्वस्य पितुः चौर्यवृत्तिं ज्ञात्वा सः खिन्नः अपि जातः । एतं खेदं सोढुम् अशक्तः सः मात्रा सह गृहं प्रति न प्रस्थितः एव । मन्दिरे एव एकत्र उपविश्य - 'स्वभक्तं मम पितरं भवानी कथं वा रक्षेत् ?' इति चिन्तयन् सः निद्रां प्राप्नोत् ।

निद्रामग्नेन तेन कश्चन स्वप्नः दृष्टः । तत्र सुमङ्गलारूपेण आगता भवानी तं पृष्टवती - ''नारायण ! भवत्पिता न रक्षितः इत्यतः निन्दितुम् अत्र आगतं किम् ?'' इति ।

नारायणः एतस्मात् प्रश्नात् किञ्चिदिव भीतः सन् अवदत् - ''नास्ति अम्ब ! अनुग्रहं करोतु इति प्रार्थयितुम् अहम् अत्र आगतः'' इति ।

तदा गम्भीरस्वरेण उक्तवती सा सुमङ्गला - ''अहं सुमङ्गलारूपेण आगता अस्मि चेदपि भवान् माम् अभिज्ञातवान् । भवतः भक्तिः श्लाघनीया इत्यत्र नास्ति सन्देहः । भवतः पिता वाल्मीकिः भवितुम् इष्टवान् । किन्तु मनसः विकारान् सः त्यक्तुं न इष्टवान् । तस्मिन् रागद्वेषासूयादयः इदानीमपि सन्ति । कुटुम्ब-पोषणार्थं यावत् चौर्यं कृतं तावत् मया क्षान्तम् । किन्तु वाल्मीकिः इव प्रसिद्धः भवितुं यदा सः ऐच्छत् तदा मया ग्रहणं कारितम्'' इति ।

ततः तस्य मनसि विचारः उत्पन्नः - 'यदि अहम् अपि चौर्यं त्यजेयं तर्हि गच्छता कालेन महापुरुषः भवेयम्' इति ।

सः भवानीं प्रार्थितवान् - 'मातः ! अद्य-तनम् एव अन्तिमचौर्यं मम । ततः पण्डितात् विद्याम् अभ्यस्य कश्चन ग्रन्थं लेखिष्यामि । अतः अद्य महान् लाभः यथा भवेत् तथा माम् अनुगृह्णातु' इति । एवं पुनः पुनः प्रार्थयन् सः चौर्यार्थं गतः । किन्तु दौर्भाग्यं नाम सः तस्मिन् एव दिने आरक्षकैः गृहीतः अभवत् । आरक्षकाः तं दण्डाधिकारिणः समीपं नीत-वन्तः । अधिकारी तं कारागारे स्थापितवान् ।

बहूनि दिनानि व्यतीतानि । पत्युः अनागमनं दृष्ट्वा भुक्कस्य पत्नी नितरां भीता । 'मम पतिः किम् आरक्षकैः गृहीतः स्यात् ?' इति तस्याः मनसि सन्देहः उत्पन्नः । कदाचित् सा

''मातः ! इदानीं मातुः पालनादिकं मम कर्तव्यम् । आवर्षं वेतनेन जीवितुम् इच्छामि । किन्तु तादृशं कार्यं न लभ्यते । किमपि वाणिज्यं कर्तुं मम समीपे पर्याप्तमात्रेण धनं नास्ति'' इति वदन् सः गद्गदकण्ठः सन् अग्रे वक्तुम् असमर्थः जातः ।

सुमङ्गला अदृश्या जाता । नेत्रे उद्घाटितवान् नारायणः स्वगतम् उक्तवान् – 'मातरं भवानीं प्रत्यक्षं दृष्टवान् अहमेव धन्यः । महतः पुण्यस्य कारणात् सा मया स्वप्ने दृष्टा' इति ।

यदा सः ततः उत्थितवान् तदा समीपे एव कश्चन स्यूतः तेन दृष्टः । आश्चर्येण सः तं स्यूतम् उद्घाट्य दृष्टवान् । तत्र अनेकानि सुवर्णनाणकानि आसन् ।

'मया एतानि नाणकानि न चोरितानि । माता भवानी स्वयमेव मह्यम् एतानि दत्तवती' इति चिन्तयन् सः तं स्यूतं स्वीकृत्य ततः राजधानीं प्रति प्रस्थितवान् । महता प्रयत्नेन तेन राज्ञः दर्शनं प्राप्तम् । राजानं पितुः विषयं समग्रम् उक्त्वा तेन आत्मना दृष्टः स्वप्नविषयः अपि उक्तः ।

राजा नारायणस्य वचनेन आश्चर्यम् अनुभवन् – ''नारायण ! भवान् धर्मिष्ठः । अतः एव मात्रा भवान्या दत्तं धनं स्वीकृत्य भवता अत्र आगतम् । यदि अन्यः स्यात् तर्हि सः धनेन सह पलायनम् अकरिष्यत् । भवतः पिता वाल्मीकिः भवितुम् इच्छति चेत् तत्र नास्ति आपत्तिः । किन्तु तेन तदर्थं यः मार्गः आश्रितः सः असमीचीनः । अतः एव माता भवानी तस्मै दण्डनं दत्तवती, तेनैव सह अनुग्रहमपि कृतवती'' इति उक्त्वा सैनिकान् आहूय – 'भुक्कं कारागारतः मोचयन्तु' इति सूचितवान् । पितापुत्रयोः सुखजीवनाय या व्यवस्था अपेक्षिता ताम् अपि कारितवान् सः ।

अनया घटनया राज्ञा कश्चन अनुभवः प्राप्तः । तद्दिनात् सः अपराधिनां मनःपरिवर्तनाय महान्तं प्रयासम् आरब्धवान् । यदि महतः प्रयासस्य अनन्तरम् अपि अपराधी न परिवृत्तः तर्हि एव तस्य दण्डनम् आदिशति स्म सः । कदाचित् अपराधिनां परिवारस्य वासादिनिमित्तं योग्यां व्यवस्थाम् अपि परिकल्पयति स्म सः ।





# कृतज्ञता कृतघ्नता च

रत्नगिरिः कश्चन ग्रामः । तत्रत्यस्य भूस्वामिनः उद्यानपालकः कदाचित् सर्पदंशनेन मृतः । अतः भूस्वामी तदीयं गृहं गत्वा तस्य पत्नीं समाश्वासयन् उक्तवान् - ''पत्युः मरणेन भवत्याः गृहे आर्थिकसमस्या उत्पन्ना अस्ति इति अहं जानामि । भवताम् उपजीविकायाः निमित्तं कस्यचित् मार्गस्य दर्शनं मम दायित्वम् । अतः भवत्याः ज्येष्ठपुत्रं मम आप्तसहायकत्वेन नियोक्ष्यामि'' इति ।

एतत् श्रुत्वा उद्यानपालकस्य पत्नी उक्तवती - ''श्रीमन् ! मम ज्येष्ठः पुत्रः बुद्धिमान्, प्रयत्नशीलः, कष्टसहिष्णुः चापि । समस्यानां सम्मुखीकरणे नास्ति भीतिः तस्य । यत्र-कुत्रचिदपि उद्योगं प्राप्तुं समर्थः सः । अतः यदि भवान् मम कनिष्ठपुत्रं तस्मिन् उद्योगे नियोजयेत् तर्हि महान् उपकारः भवेत् । मम कनिष्ठः पुत्रः ज्येष्ठपुत्रवत् समर्थः न'' इति ।

भूस्वामी एतस्मिन् विषये ज्येष्ठपुत्रस्य अभिप्रायं पृष्टवान् । तेन मातुः अभिप्रायः सहर्षम् अङ्गीकृतः । ततः भूस्वामिना कनिष्ठ-पुत्रः आप्तसहायकस्थाने नियुक्तः । एतेन कनिष्ठपुत्रः सुखेन कालं यापयन् आसीत् ।

ज्येष्ठपुत्रः कृषिकार्ये निमग्नः जातः । पित्रा सम्पादिता एकरद्वयमिता भूमिः तु आसीत् । किन्तु कृषियोग्या न आसीत् । तथापि ज्येष्ठपुत्रः अहोरात्रं परिश्रम्य तस्याः भूमेः फलवत्तां वर्धितवान् । कुतश्चित् ऋणम् आनीय तस्मिन् क्षेत्रे तेन आम्रसस्यानि आरोपितानि । महत्या श्रद्धया तेन क्षेत्रस्य रक्षणम् अपि कृतम् । चतुर्णां वर्षाणां परिश्रमस्य फलरूपेण आम्र-सस्योद्यानं पुष्पितं जातम् । वृक्षाः फलैः पूर्णाः अपि अभवन् । अनेन तस्य आयः अधिकः

जातः । ततः द्वित्रेषु वर्षेषु तेन तस्मिन् एव ग्रामे अन्या भूमिः अपि क्रीता ।

रत्नगिरौ स्थितः अनुजः एतं विषयं समग्रतया ज्ञातवान् । अग्रजस्य वर्धनं सः न असहत । ज्येष्ठभ्रातुः त्यागेन एव मया एषः उद्योगः प्राप्तः इत्यंशः अपि तेन विस्मृतः । कृतज्ञतायाः लेशः अपि तस्मिन् न आसीत् ।

कदाचित् सः ग्रामम् आगत्य मातरम् अवदत् - ''अम्ब ! किम् एतत् प्रचलति अत्र ? यदत्र प्रचलति तत् तु अन्याय्यम् । पितुः सम्पत्तौ उभयोः अपि पुत्रयोः समानः अधिकारः भवति । किन्तु एषः अग्रजः समग्रं लाभं स्वयमेव अनुभवन् अस्ति । भवती सर्वं दृष्ट्वा अपि किमपि न उक्तवती, कृतवती वा । किम् एतत् उचितम् ?'' इति ।

माता ज्येष्ठपुत्रस्य समर्थनं कर्तुम् उद्युक्ता । किन्तु एतेन न किमपि प्रयोजनं, प्रत्युत एतस्य कोपः एव वर्धेत इति विचिन्त्य सा मौनम् आश्रितवती । मातुः मौनं दृष्ट्वा खिन्नः अनुजः तस्मिन् एव ग्रामे वसन्तं बन्धुं शरभं दृष्ट्वा स्वस्य व्यथां निवेदितवान् । शरभः कलहप्रियः । कलहोत्पादने तस्य महती रुचिः । एतदर्थं सः अवकाशं प्रतीक्षमाणः भवति स्म । कलहावसरे सः स्वकीयं लाभम् अपि उपायेन सम्पादयति स्म ।

सः अनुजस्य मुखात् सर्वं श्रुत्वा उक्तवान् - ''वत्स ! एषः विषयः न सुलभपरिहारयोग्यः । ग्रामाधिकारी एव एतं परिहर्तुं समर्थः । सः मम मित्रम् अपि । अतः एतं विवादं तत्समीपं नयाम'' इति ।

ग्रामाधिकारी उत्कोचग्राही । सः अनुजस्य हस्तात् प्रभूतम् उत्कोचं स्वीकृत्य तस्य आनुकूल्यं यथा स्यात् तथा निर्णयं श्रावितवान् । एतस्मिन् व्यवहारे शरभः हस्तक्षेपं कुर्वन् स्वस्य लाभं तु सम्पादितवान् एव ।

एतस्मात् अनुजः एकर्परिमितां भूमिं



प्राप्तवान् खलु ? एषा किं करणीया, एतां कस्य वा अधीनां करोमि इति चिन्तनम् उत्पन्नम् अनुजस्य मनसि । एषः एव सुसमयः इति मत्वा शरभः तम् अवदत् - "एतद्विषये किमर्थं चिन्ता भवतः ? अहम् अस्मि खलु भवतः साहाय्यं कर्तुम् । अहम् एतत् आम्रोद्यानं पालयिष्यामि । वर्षान्त्ये यः आयः प्राप्स्यते तत्र समभागम् आवां स्वीकरवाव" इति ।

एतेन गतचिन्तः अनुजः आम्रोद्यानस्य पालनदायित्वं शरभाय दत्त्वा अनन्तरदिने एव रत्नगिरिं प्रति गतवान् ।

माता एतत्सर्वं पश्यन्ती आसीत् । एतस्मिन् व्यवहारे शरभ-ग्रामाधिकारिणोः हस्तक्षेपं, ज्येष्ठपुत्रविषये जातम् अन्याय्यं च दृष्ट्वा सा नितरां खिन्ना । अतः सा ज्येष्ठपुत्रेण सह रत्नगिरिं गत्वा प्रवृत्तं समग्रं भूस्वामिनम् उक्तवती ।

भूस्वामी कनिष्ठपुत्रम् अपि आनाय्य उभयपक्षस्य अपि कथनम् आदौ श्रुतवान् । ततः कनिष्ठपुत्रम् उद्दिश्य कोपेन उक्तवान् - "भोः, कृतघ्न ! यः भवतः हितैषी, यश्च भवतः निमित्तं हस्तगतम् उद्योगं परित्यक्तवान् तादृशस्य अग्रजस्य विषये एवं व्यवहृतवान् खलु भवान् ! किम् एवं व्यवहरतः भवतः लज्जा न भवति ? ज्येष्ठाः कथयन्ति यत् कृतघ्ने नास्ति निष्कृतिः इति । अयोग्यः भवान् मम कार्यालये स्थातुम् अयोग्यः । अतः अधुनैव भवन्तम् उद्योगात् निष्कासितवान् अस्मि । आम्रोद्याने एव भवान् सुखेन वसतु नाम" इति ।

शरभं ग्रामाधिकारिणं चापि सः सम्यक् भर्त्सितवान् । तयोः यथोचितदण्डः अपि विहितः तेन । ततः सः ज्येष्ठपुत्रम् उद्दिश्य - "भवतः परिश्रमेण ऊषरा भूमिः उर्वरा संवृत्ता । भवादृशाः एव पुरस्कारार्हाः । अतः भवन्तं ग्रामाधिकारिपदे नियुक्तवान् अस्मि" इति उक्त्वा तदर्थं यानि व्यवहारपत्राणि कारणीयानि तानि तस्मिन् एव दिने कारितवान् । एवं निष्कपटः अग्रजः दैवानुग्रहेण उत्तमां स्थितिं प्राप्तवान् ।



# उभौ उद्योगिनौ



कोदण्डः भूस्वामिनः कार्यालये उद्योगी । कृषिकार्यार्थम् आगच्छतां कर्मकराणां कार्यस्य अवलोकनं तस्य कर्म । कर्मकराणां पुरतः स्वस्य अधिकारबलं दर्शयति स्म सः । कर्मकराः प्रतिदिनं यत् कार्यं कुर्वन्ति तस्य समग्रं विवरणं स्वस्य पुस्तके लिखति स्म सः । सप्ताहे एकवारं तत् पुस्तकं स्वामिने दर्शयति स्म अपि ।

एवम् एव कालः याति स्म । कदाचित् रत्नमोहनः नाम अपरः कश्चित् भूस्वामिकार्यालये नियुक्तः जातः । कर्मकराणां कार्यस्य अवलोकनम् एव तस्यापि कार्यम् । सः अपि कर्मकराणां कार्यस्य विवरणं पुस्तके लिखित्वा भूस्वामिने दर्शयति स्म सप्ताहे एकवारम् । कदाचित् कर्मकरैः सह उपविश्य ताडरसं पिबन् रत्नमोहनः दृष्टः कोदण्डेन । सः एतम् अंशं स्वपुस्तके लिखितवान्, रत्नमोहनाय दर्शितवान् च ।

तदा रत्नमोहनः म्लानमुखः सन् - ''कोदण्ड ! किम् एतत् लिखितं भवता ? भवतः पुस्तके यत् लिखितं तत् दृष्टं चेत् भूस्वामी माम् उद्योगात् च्यावयेत् अपि । अतः तत्र यत् लिखितं तत् कथमपि अपनयतु । अन्यथा मम सर्वनाशः भवेत्'' इति अवदत् ।

तत् श्रुत्वा कोदण्डः अवदत् - ''भोः, अहम् अस्मि शुद्धव्यवहारः जनः । अतः सत्यस्य गोपनं कथम् अहं कुर्याम् ? भवतः दुर्व्यसनशीलता भूस्वामिना ज्ञातव्या एव खलु ?'' इति ।

तदा रत्नमोहनः स्वस्य पुस्तकम् उद्घाट्य तत्र लिखितं कोदण्डाय दर्शितवान् । तत्र लिखितम् आसीत् - ''एतेषु दिनेषु अद्य एकस्मिन् एव दिने कोदण्डः सुरां न पीतवान्'' इति ।



# कुशाग्रमतिः

पूर्वं कश्चन राजा आसीत् । सः प्रतिवर्षं विशेषसभाम् आयोजयति स्म । कुशाग्रमतयः तत्र निमन्त्र्यन्ते स्म । राज्यस्य प्रधानमन्त्री तान् परीक्ष्य तेषु चतुरतमं कुशाग्रमतिं चित्वा तम् आस्थानकार्ये नियोजयति स्म ।

कदाचित् एवं प्रवृत्तायां विशेषसभायां गणपतिनामकः कश्चन युवकः स्वस्य कुशाग्रमतित्वेन सर्वान् अतिशय्य स्थितवान् ।

अन्ते प्रधानमन्त्री तस्य परीक्षार्थम् उद्युक्तः अभवत् । सः गणपतिम् अपृच्छत् - ''किं भवान् हस्तवन्तं कुणिं दृष्टवान् ?'' इति ।

तदा गणपतिः अवदत् - ''आम् । अहम् अत्र आगच्छन् एकं भिक्षुकं दृष्टवान् । सः स्वस्य पुरतः कागदं संस्थाप्य लेखनीं गृहीत्वा उपविष्टवान् आसीत् । मां दृष्ट्वा सः अवदत् - 'दानं करोतु महोदय !' इति । मया एकं नाणकं तस्मै दत्तम् । सः स्वकागदे लिखितवान् 'द्वितीयः' इति । मया पृष्टं - 'किं लिख्यते भवता ?' इति । भिक्षुकः अवदत् - 'ये हस्तवन्तः सन्तोऽपि कुणयः भवन्ति तादृशान् गणयन् अस्मि' इति । ये दानं न कुर्वन्ति ते हस्तवन्तोऽपि कुणयः एव इति तस्य भिक्षुकस्य आशयः आसीत्'' इति ।

''एवमेव नेत्रवन्तोऽपि अन्धाः भवितुम् अर्हन्ति खलु ?'' इति अपृच्छत् मन्त्री ।

''आम् । अहं कदाचित् नगरं गतवान् आसम् । तत्र मया एकं कीलितं गृहं दृष्टम् । तस्य अन्तर्भागतः कोऽपि शब्दः श्रूयते स्म । मया द्वारसमीपे स्थित्वा उच्चस्वरेण पृष्टम् - 'कः तत्र अन्तः ?' इति । किन्तु ततः उत्तरं किमपि न आगतम् । अहं झटिति प्रतिवेशिनः मेलितवान् । तदा कश्चन चोरः पलायनाय

उद्युक्तः । वयं सर्वे मिलित्वा तं गृहीतवन्तः । सः चोरः माम् उद्दिश्य अवदत् - 'नेत्रवन्तोऽपि अन्धाः ये भवन्ति तेषु अन्यतमः न भवान् । किन्तु भवादृशाः विरलाः । अतः एव अस्माकं वृत्तिः प्रचलति' इति । ये कीलितं गृहं दृष्ट्वा तदन्तर्भागतः आगतं ध्वनिं च श्रुत्वा अपि तद्विषये अवधानं न यच्छन्ति ते एव नेत्रवन्तोऽपि अन्धाः'' इति ।

''जिह्वावन्तोऽपि मूकाः के भवितुम् अर्हन्ति ?'' इति अपृच्छत् मन्त्री ।

तदा गणपतिः अवदत् - ''कदाचित् मया कस्माच्चित् धनिकात् ऋणं प्राप्तव्यम् अभवत् । यदा वृद्धिविषये चर्चा आगता तदा धनिकः अवदत् - 'ये जिह्वावन्तोऽपि मूकाः भवन्ति तेभ्यः प्रतिमासं प्रतिरूप्यकं चतुराणकात्मिकां वृद्धिं स्वीकरोमि । ये तादृशाः न, तेभ्यः न स्वीकरोमि' इति । मया एतस्य तात्पर्यं पृष्टम् । तदा धनिकेन उक्तं - 'ये ऋणं प्राप्य निश्चिते काले अप्रत्यर्पयन्तः व्याजं कथयन्ति ते जिह्वावन्तोऽपि मूकाः इति ।''

मन्त्रिणा पुनः पृष्टम् - ''यत् विना सूचनां आगच्छति, विना सूचनां च गच्छति, यच्च मृत्युतः अन्यत् तत् किम् ?'' इति ।

तदा गणपतिः अवदत् - ''यौवनं भवति तादृशम् । तस्य आगमनं कस्मिन् दिने अभवत् इति न ज्ञायते । तत् कदा गच्छति इत्यपि न ज्ञायते । अतः तस्य व्यर्थता न करणीया । भाग्यम् अपि एतादृशम् एव भवति । अतः भाग्ये अधिकविश्वासः न श्रेयसे । एतत्सर्वं पितामहः मां बोधितवान्'' इति ।

''किं बहुवारं म्रियमाणाः अपि भवन्ति ?'' मन्त्री अपृच्छत् ।

एतस्य उत्तररूपेण गणपतिः अवदत् - ''एतस्मिन् नगरे रुदती काचित् महिला दृष्टा मया । मया रोदनस्य कारणं पृष्टम् । तदा तया उक्तं - 'मम जीवनं रोदनमयं जातम् अस्ति । मम वीरः पुत्रः वर्षद्वयात् पूर्वं मृतः । पतिः तु भीरुः । सः दिने दशवारं मरणं प्राप्नोति'' इति ।

एतदनन्तरं मन्त्री राजानम् अवदत् यत् आस्थाने एतस्य नियुक्तिः अवश्यं भवितुम् अर्हति इति ।

राजा तस्मिन् एव दिने गणपतिम् आस्थाने नियुक्तवान् ।



चन्दमामायाः प्रस्तुतिः

# अजेयः गरुडः

२०

चित्रं - पाणिः

रवीन्द्रदेवः आदित्यस्य अन्वेषणं परित्यज्य पित्रा नरेन्द्रदेवेन सह स्थातुं पर्वतीयगुहां प्रति गच्छति । नागबन्धुः विचित्राकारवन्तं पाशङ्करम् आवाह्य स्वशत्रोः गरुडस्य आश्रये स्थितम् आदित्यम् आनेतुं प्रेषयति राजा महेन्द्रवर्मा चन्द्रपुरीं प्रत्यागत्य नरेन्द्रदेवरवीन्द्रदेवौ राजद्रोहिणौ इति उद्घोषयति । आदित्यः तयोः आनयनाय मारणाय वा सर्पदेशं प्रति गमनाय उद्युक्तः भवति ।












आदित्यः यदा नेत्रे निमीलयति तदा यागानुष्ठाने मग्नः तान्त्रिकः तस्य मनःपटले दृश्यते ।





गरुडप्रतिमायाः पुरतः स्थापितः पिञ्छः महापक्षिणः रूपं प्राप्य सर्पस्य ग्रहणाय गच्छति । पाशङ्करः धावितुम् उद्युक्तः भवति ।



पक्षी स्वपादाभ्यां सर्पं गृहीतवान् । पाशङ्करः ततः आत्मानं मोचयितुम् असमर्थः । उभयोः सङ्घर्षः प्रचलति । पाशङ्करः अग्निम् उद्वमति ।



सर्पः परास्तः भवति । शक्तिशाली पक्षी व्रणितं सर्पं स्वीकृत्य आकाशे उड्डयते, तान्त्रिकस्य गुहायाः पुरतः सर्पं पातयति च ।

महतः वस्तुनः पतनशब्दं, पक्षयोः चालनशब्दं च श्रुत्वा तान्त्रिकः गुहातः बहिः आगच्छति । वेदनया कष्टम् अनुभवन्तं सर्पं, ततः निर्गच्छन्तं पक्षिणं च पश्यति सः ।




हे प्रभो ! दुष्टशक्तेः सम्मुखीकरणाय मह्यं पर्याप्त-शक्तिं ददातु ।
आदित्यः ध्याने तिष्ठन् अपि विचित्रघटनाः अवगच्छन् अस्ति ।


स्त्रीरूपं मुखं क्रमेण द्रवरूपतां प्राप्नोति । तत्र पाशाङ्कुरस्य रूपं दृश्यते ।
हे प्रभो ! सः कोटिसूर्यसमप्रभः अस्ति । मम दन्तेषु...


..स्थिता शक्तिः क्रमशः हता जाता । इदानीम् अहं विषहीनः सर्पः इव दुर्बलः जातः अस्मि ।
आदित्यः मार्गम् उपदिशन्तं कोमलस्वरं शृणोति ।


नागबन्धुः अविश्वसनीयम् आघातं प्राप्नोति ।
गरुड ! भवतः अन्त्यं सन्निहितम् अस्ति । यदि शक्ति अस्ति तर्हि मां सम्मुखीकरोतु


तान्त्रिकस्य स्पर्धाह्वानं श्रुत्वा आदित्यः चिन्ताक्रान्तः भवति । ज्योतिर्मयः आकारः तत्समीपम् आगच्छति ।


पाशाङ्कुरः निराकारबाष्परूपतां प्राप्य अदृश्यः भवति ।
आदित्य ! वत्स इदानीं दुष्टशक्तेः मूलम् उत्पाटयितुं कालः उपस्थितः अस्ति ।


विचित्रः स्वरः आदित्यस्य सन्निकटम् आगच्छति श्वासोच्छ्वासस्य अनुभवः यावत् भवति तावत् ।
तस्य शरीरम् अग्निकुण्डे पातनीयं, यत्र च असङ्ख्याः प्राणिनः भस्मीभूताः सन्ति । अग्निः एकः एव तं विनाशयितुमर्हति । भवान्...
तावत् निरापदं स्थास्यति, यावत् पिञ्छः भवत्समीपे स्थास्यति ।


तस्य आक्रमणात् पूर्वमेव भवता स्वयम् आक्रमणं करणीयम् । तं लक्ष्यीकृत्य पिञ्छं प्रयुज्य तं संहरतु ।
स्वस्य शक्तिः अधिकः जायमानः अस्ति इति अनुभवं प्राप्नोति आदित्यः ।


हे प्रभो ! अपाये स्थितां मानवतां रक्षितुं भवतः आशीर्वादेन शक्नोमि इति मम विश्वासः अस्ति ।
यदा कोमलः स्वरः स्थगितः भवति तदा आदित्यः जागरितः भवति स्वप्नात् इव ।


आदित्यः उत्थाय स्वस्य उष्णीषस्य अन्तः पिञ्छं जागरूकतया रक्षति ।
मया राज्ञः अनुज्ञा प्राप्तव्या । समयः अत्यल्पः अस्ति इदानीम् ।


महाराज ! भवतः आशीर्वादस्य कारणतः मया सफलता प्राप्स्यते एव ।
आदित्य ! भवान् सफलतां प्राप्य सुरक्षिततया प्रत्यागच्छेत् इति चन्द्रगिरेः प्रजाः इच्छन्ति । मम शुभाशंसनं तु अस्ति एव ।
अनुवर्तते

# कालोऽयं मनोविनोदस्य

## उपक्रियतां मण्डूकी

बाला मण्डूकी चिन्तयति - एतस्मिन् व्यूहे स्थितेभ्यः खादनोद्यतेभ्यः सर्वेभ्यः आत्मनः रक्षणम्, अग्रे गमनं च कथम् इति ।







## राहुलस्य च्छाया

राहुलः चङ्क्रमणं कुर्वन् अस्ति । पार्श्वस्थासु तिसृषु स्वस्य च्छाया का इति सः न जानाति । तस्य च्छाया का इति किम् अभिज्ञातुं शक्नुयुः भवन्तः ?

## चित्रे दोषाः

एतत् चित्रम् अरण्यस्य वास्तविकं चित्रम् इव भासते । सर्वे पशु-पक्ष्यादयः सन्ति अत्र सन्तोषेण । किन्तु सर्वे स्वस्थाने न सन्ति । किं भवन्तः अत्रत्यान् दोषान् अन्वेष्टुं शक्नुयुः ?

*(उत्तराणि ६६ तमे पृष्ठे)*

## भेदांशाः अभिज्ञायन्ताम्

उभे अपि चित्रे यद्यपि समानाकारके इव भासेते, तथापि तयोः अष्टसु अंशेषु भेदाः सन्ति । तान् अभिजानन्तु भवन्तः ।








# चित्रशीर्षिकास्पर्धा





**उपरितनं चित्रद्वयं दृष्ट्वा परस्परसम्बन्धिवाक्यद्वयेन चित्रशीर्षिकां किं भवन्तः प्रेषयितुं शक्नुयुः ?**

समपत्रे लिखिता चित्रशीर्षिका अधस्तनसङ्केताय प्रेषणीया -

**चन्दमामा (संस्कृतम्) 'अक्षरम्' ८ उपमार्गः, गिरिनगरम्, बेङ्गलूरु - ५६००८५**

युक्ता शीर्षिका एतन्मासस्य २५ तः पूर्वं प्रेषणीया । सर्वश्रेष्ठायै शीर्षिकायै रू. १००/- पुरस्काररूपेण दास्यन्ते । पुरस्कृता शीर्षिका मासद्वयानन्तरं प्रकाशयिष्यते ।

## अभिनन्दनानि

**'अक्टेबर्'मासीयस्पर्धाशीर्षिकाप्रेषकः -**

**श्री रमाकान्त मिश्रः**

*रा.गा.के.सं.विद्यापीठम्*

***शृङ्गेरी - ५७७ १३९, कर्णाटकम्***

**पुरस्कृतशीर्षिका**





**बाधते चिन्ता किम् ?**
**एवं पूजय देवम् ।**

**उत्तरम् मनोविनोदस्य (पृ - ६४)**

**अन्विष्यन्तां भेदांशाः**

१. तूणीरस्थानां बाणानां सङ्ख्या ।
२. लक्ष्यस्थानि वर्तुलानि ।
३. वस्त्रस्य विन्यासः ।
४. पृष्ठभूमिस्थाः पर्वताः ।
५. पक्षिशिरस्थाः लघुपक्षाः ।
६. बालस्य उष्णीषस्थाः बिन्दवः ।
७. पक्षिणः पक्षविन्यासः ।
८. स्वेदबिन्दोः आकारः ।

**राहुलस्य च्छाया - ३**

**चित्रे दोषाः**

शुकः वृक्षं छिनत्ति । उलूकः दिने दृश्यते । व्याघ्रः तृणं खादति । शशस्य पुच्छम् अन्यविधम् । शशः मांसं खादति । शुनकः काङ्गरूउदरे अस्ति । काङ्गरूशिरसि शृङ्गम् अस्ति ।


Printed and Published by B. Viswanatha Reddi at B.N.K. Press Pvt. Ltd., Chennai - 600 026 on behalf of Chandamama India Limited, No. 82, Defence Officers Colony, Ekkatuthangal, Chennai - 600 097. Editor : Viswam

Chandamama CD-ROMs, are also available at all leading bookstores in India.




Its hours of non-stop fun!

Create your own Posters

Learn to Draw

Click to Paint

Drag and Drop to Dress Up your family

RS. 199/-

>DIRECT MAIL OFFER FOR CHANDAMAMA READERS<

**To avail 20% discount on Chandamama CD-ROMs, please write to the Project Head Multimedia with your :**

Name & Mailing address ............................

Fun Workshop ☐ Copies

Early Reader Series
Jataka Tales Level 1 ☐ Copies
Total Copies : ☐ x 199

Please add delivery charges : By Regd. Post Rs. 41/- per CD and Rs.25/- for out-station cheques.

Enclose your order with a Cheque / DD, drawn in favour of Chandamama India Limited, payable at Chennai.

** Offer available only for Indian residents.*

# CHANDAMAMA'S

## EARLY READER SERIES Level-1

( FIRST 100 HOURS OF LANGUAGE LEARNING )






RS. 199/-







**JATAKA TALES - Early Reader Series (Level 1) teaches children to instantly recognise 100 sight words in English. It promises clean fun, good learning and a superior pedagogical approach.**

**It is the first of a 3-series pack.**

**These CD-ROMs can also be used for any ESL (English as Second Language) course or Adult education programs that teach English.**

*Across media, a common tradition!*



*For trade and commercial enquiries contact:*


*Project Head, Multimedia*
**CHANDAMAMA INDIA LIMITED**
No. 82, Defence Officers Colony,
Ekkatuthangal, Chennai - 600 097. India.
Ph : 91-44-2347384, 91-44-2347399
*Visit us at* http://www.chandamama.org

